# वराहमिहिरस्य बृहत्संहिता

अध्याय १ उपनयनाध्यायः
जयति जगतः प्रसूतिः विश्वात्मा सहजभूषणं नभसः ।
द्रुतकनकसदृशदशशतमयूखमालार्चितः सविता ॥१॥
प्रथममुनिकथितमवितथमवलोक्य ग्रन्थविस्तरस्यार्थम् ।
नातिलघुविपुलरचनाभिरुद्यतः स्पष्टमभिधातुम् ॥२॥
मुनिविरचितमिदमिति यगिरन्तनं साधु न मनुजग्रथितम् ।
तुल्येऽर्थेऽक्षरभेदादमन्त्रके का विशेषोक्तिः ॥३॥
क्षितितनयदिवसवारो न शुभकृदिति यदि पितामहप्रोक्ते ।
कुजदिनमनिष्टमिति वा कोऽत्र विशेषो नृदिव्यकृतेः (कृते) ॥४॥
आब्रह्मादिविनिःसृतमालोक्य ग्रन्थविस्तरं क्रमशः ।
क्रियमाणकमेव एतत् समासतोऽतो ममौत्साहः ॥५॥
आसीत्तमः किलैदं तत्रापां तैजसेऽभवद् धैमे ।
स्वर्भूशकले ब्रह्मा विश्वकृदण्डेऽर्कशशिनयनः ॥६॥
कपिलः प्रधानमाह द्रव्यादीन् कणकभुग् अस्य विश्वस्य ।
कालं कारणमेके स्वभावमपरे जगुः कर्म ॥७॥
तदलमतिविस्तरेण प्रसंगवादार्थनिर्णयोऽतिमहान् ।
ज्योतिःशास्त्रांगानां वक्तव्यो निर्णयोऽत्र मया ॥८॥
ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्यौपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिः तन्त्राभिधानः त्वसौ
होरा अन्यो अंगविनिश्चयश्च कथितः स्कन्धः तृतीयोऽपरः ॥९॥
वक्रानुवक्रास्तमयौदयाद्याः ताराग्रहाणां करणे मयोक्ताः ।
होरागतं विस्तरशश्च जन्मयात्राविवाहैः सह पूर्वमुक्तम् ॥१०॥
प्रश्नप्रतिप्रश्नकथाप्रसंगान् स्वल्पौपयोगान् ग्रहसंभवांश्च ।
सन्त्यज्य फल्गूनि च सारभूतं भूतार्थमर्थैः सकलैः प्रवक्ष्ये ॥११॥

अध्याय २ अथातः सांवत्सरसूत्रं व्याख्यास्यामः ।
तत्र सांवत्सरोऽभिजातः प्रियदर्शनो विनीतवेषः सत्यवाग् -
अनसूयकः समः सुसंहिता उपचितगात्रसन्धिः -
अविकलश्चारुकरचरणनखनयनचिबुकदशनश्रवणललाटभ्रू -
उत्तमांगो वपुष्मान् गंभीरौदात्तघोषः ।
प्रायः शरीर आकारानुवर्त्तिनो (वर्तिनो) हि गुणा दोषाश्च भवन्ति ।
तत्र गुणाः-शुचिः दक्षः प्रगल्भो वाग्ग्मी (वाग्मी)
प्रतिभानवान् -
देशकालवित् सात्त्विको न पर्षद्भीरुः सहाध्यायिभिः
अनभिभवनीयः -
कुशलोऽव्यसनी शान्तिकपौष्टिकाभिचारस्नानविद्याभिज्ञो -
विबुधार्चनव्रतौअपवासनिरतः स्वतन्त्राश्चर्या
उत्पादितप्रभावः -
पृष्टाभिधाय्यन्यत्र दैवात्ययाद् ग्रहगणितसंहिताहोरा-
ग्रन्थार्थवेत्ता इति ।
तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु -
पंचस्वेतेषु सिद्धान्तेषु -
युगवर्षायनऋतुमासपक्षाहोरात्रयाममुहूर्तनाडीविणाडीप्राण-
त्रुटित्रुट्याद्यवयव आदिकस्य (आद्यस्य) कालस्य क्षेत्रस्य च वेता ।
चतुर्णां च मानानां सौरसावननाक्षत्रचान्द्राणामधिमा-
सकावमसंभवस्य च कारणाभिज्ञः ।
षष्ट्यब्दयुगवर्षमासस्
दिनहोरा अधिपतीनां प्रतिपत्ति (वि)च्छेदवित् ।
सौरादीनां च मानानामसदृशसदृश (सदृशासदृश) -
योग्यायोग्यत्वप्रतिपादनपटुः ।
सिद्धान्तभेदेऽपि अयननिवृत्तौ प्रत्यक्षं -
सममण्डललेखासंप्रयोगाभ्युदितांशकानां (च) -
छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादनकुशलः ।
सूर्यादीनां च ग्रहाणाम् -
शीघ्रमन्दयाम्यौत्तरनीचौच्चगतिकारणाभिज्ञः ।
सूर्यचन्द्रमसोश्च ग्रहणे ग्रहण -
आदिमोक्षकालदिक्प्रमाणस्थितिविमर्दवर्णादेशानां
(वर्णदेशानां) -
अनागतग्रहसमागमयुद्धानामादेष्टा ।
प्रत्येकग्रहभ्रमणयोजनकक्ष्याप्रमाणप्रतिविषययोजन-
परिच्छेदकुशलः (कुशलो) ।
भूभगणभ्रमणसंस्थानाद्यक्षावलंबकाहर्व्यासचरदलकालरा-
श्युदयच्छायानाडीकरणप्रभृतिषु क्षेत्रकालकरणेष्वभिज्ञः ।
नानाचोद्यप्रश्नभेदौपलब्धिजनितवाक्सारो-
निकषसन्तापाभिनिवेशैः (विशुद्धस्य)
कनकस्यैवाधिकतरममलीकृतस्य -
(शास्त्रस्य) वक्ता तन्त्रज्ञो भवति (उक्तज् च) ।
न प्रतिबद्धं गमयति वक्ति न च प्रश्नमेकमपि पृष्टः ।
निगदति न च शिष्येभ्यः स कथं शास्त्रार्थविज्ञेयः ॥१॥
ग्रन्थोऽन्यथा अन्यथार्थं (अन्यथार्थः) करणं यश्चान्यथा करोत्यबुधः ।
स पितामहमुपगम्य स्तौति नरो वैशिकेनार्याम् ॥२॥
तन्त्रे सुपरिज्ञाते लग्ने छाया अंबुयन्त्रसंविदिते ।
होरार्थे च सुरूढे नादेष्टुः भारती वन्ध्या ॥३॥
उक्तन् चार्यविष्णुगुप्तेन
अपि अर्णवस्य पुरुषः प्रतरन् कदाचिद्
आसादयेदनिलवेगवशेन पारम् ।
न त्वस्य कालपुरुष आख्यमहार्णवस्य
गच्छेत् कदाचिदनृषिः मनसापि पारम् ॥४॥
होराशास्त्रेऽपि (च) राशिहोराद्रेष्काणनवांशकद्वादशभा-

गत्रिंशद्भागबलाबलपरिग्रहो ग्रहाणां दिक्स्थानकालचेष्टाभिः
-
अनेकप्रकारबलनिर्धारणं प्रकृतिधातुद्रव्यजातिचेष्टादिपरिग्रहो
-
निषेकजन्मकालविस्मापनप्रत्यय आदेशसद्योमरण
आयुर्दायदशा अन्तर्दशा -
अष्टकवर्गराजयोगचन्द्रयोगद्विग्रहादियोगानां नाभसादीनाम्
च -
योगानाम् फलानि आश्रयभावावलोकननिर्याणगत्यनूकानि -
तत्काल (कालिक)प्रश्नशुभाशुभनिमित्तानि विवाहादीनाम्
च कर्मनां करणम् ।
यात्रायां तु (च) तिथिदिवसकरणनक्षत्रमुहूर्तविलग्नयोग-
देहस्पन्दनस्वप्नविजयस्नानग्रहयज्ञगणयागाग्नि-
लिंगहस्त्यश्वेंगितसेना-
प्रवादचेष्टादिग्रहषाड्गुण्यौपायमंगलामंग-
लशकुनसैन्यनिवेशभू-
मयोऽग्निवर्णा मन्त्रिचरदूताटविकानां यथाकालं प्रयोगाः
परदुर्ग (उप) -
लंभोपायश्चेत्युक्तं च आचार्यैः ।
जगति प्रसारितमिव आलिखितमिव मतौ निषिक्तमिव
हृदये ।
शास्त्रं यस्य सभगणं नादेशा निष्फलाः (निःफलाः) तस्य ॥
५॥
संहितापारगश्च दैवचिन्तको भवति ।
यत्र एते संहितापदार्थाः ।
दिनकरादीनाम् ग्रहाणां चाराः तेषु च तेषां -
प्रकृतिविकृतिप्रमाणवर्णकिरणद्युतिसंस्थानास्तमन-
उदयमार्गमार्गान्तरवक्रा-
नुवक्रऋक्षग्रहसमागमचारादिभिः फलानि नक्षत्रकूर्मविभागेन
-
देशेष्वगस्त्यचारः (अगस्तिचारः)।सप्तर्षिचारः
ग्रहभक्तयो -
नक्षत्रव्यूहग्रहशृंगाटकग्रहयुद्धग्रहसमागम-
ग्रहवर्षफलगर्भलक्षणरोहिणीस्वात्याषाढीयोगाः -
सद्योवर्षकुसुमलतापरिधिपरिवेषपरिघपवनौल्कादिग्दाह-
क्षितिचलनसन्ध्यारागगन्धर्वनगररजोनिर्घातार्घकाण्डसस्य-
जन्मेन्द्रध्वजेन्द्र-
चापवास्तुविद्या अंगविद्यावायसविद्या अन्तरचक्रमृगचक्राश्व-
चक्रवातचक्रप्रासा-
दलक्षणप्रतिमालक्षणप्रतिष्ठापनवृक्षायुर्वेदौदगार्गलनीरा-
जनखञ्जन् (अक) औत्पातशान्तिमयूरचित्रकघृत-
कंबलखड्गपट्टकृकवाकुकूर्मगोऽजाश्वेभपुरूष -
(पुरुष) स्त्रीलक्षणानि -
अन्तःपुरचिन्तापिटकलक्षणौपानच्छेदवस्त्रच्छेदचामरदण्ड-
शयना (शय्या) आसनलक्षणरत्नपरीक्षा दीपलक्षणं -
दन्तकाष्ठाद्याश्रितानि (शुद्धाशुद्धानि) (शुभाशुभानि) -
निमित्तानि सामान्यानि च जगतः प्रतिपुरुषं -
पार्थिवे च प्रतिक्षणमनन्यकर्माभियुक्तेन दैवज्ञेन
चिन्तयितव्यानि ।
न चैकाकिना शक्यन्तेऽहर्निशमवधारयितुं निमित्तानि ।
तस्मात् सुभृतेनैव दैवज्ञेनान्येऽपि तद्विदश्चत्वारः कर्तव्याः
(भर्तव्याः) ।
तत्रएकेनेन्द्री च आग्नेयी च दिग् अवलोकयितव्या ।
याम्या नैरृती चान्येनैवं वारुणी वायव्या चौत्तरा च एशानि
चेति ।
यस्मादुल्कापातादीनि (निमित्तानि) शीघ्रमप (उप) (अभि)
गच्छन्तीति ।
तस्याः (तेषां) च आकारवर्णस्नेहप्रमान
आदिग्रहऋक्षौपघातादिभिः फलानि भवन्ति ।
उक्तं च गर्गेण महर्षिणा
कृत्स्नांगोपांगकुशलं होरागणितनैष्ठिकम् ।
यो न पूजयते राजा स नाशमुपागच्छति ॥६॥
वनं समाश्रिता येऽपि निर्ममा निष्परिग्रहाः ।
अपि ते परिपृच्छन्ति ज्योतिषां गतिकोविदम् ॥७॥
अप्रदीपा यथा रात्रिः अनादित्यं यथा नभः ।
तथा असांवत्सरो राजा भ्रम्यत्यन्ध इवाध्वनि ॥८॥
मुहूर्त (मुहूर्तं) तिथिनक्षत्रम् ऋतवश्चायने तथा ।
सर्वाणि एवाकुलानि स्युः न स्यात् सांवत्सरो यदि ॥९॥
तस्माद् राज्ञाधिगन्तव्यो विद्वान् सांवत्सरोऽग्रणीः ।
जयं यशः श्रियं भोगान् श्रेयश्च समभीप्सता ॥१०॥
नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता ।
चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते ॥११॥
न सांवत्सरपाठी च नरकेषु उपपद्यते ।
ब्रह्मलोकप्रतिष्ठां च लभते दैवचिन्तकः ॥१२॥
ग्रन्थतश्चार्थतश्चैतत् कृत्स्नं जानति यो द्विजः ।
अग्रभुक् स भवेत्श्राद्धे पूजितः पंक्तिपावनः ।
म्लेच्छा हि यवनाः तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत् तेऽपि पूज्यन्ते किं पुनः दैवविद् द्विजः ॥१३॥
कुहकावेशपिहित (इः) कर्णोपश्रुतिहेतुभिः ।
कृतादेशो न सर्वत्र प्रष्टव्यो न स दैववित् ॥१४॥
अविदित्वैव यत् (यः) शास्त्रं दैवज्ञत्वं प्रपद्यते ।
स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥१५॥
नक्षत्रसूचकोद्दिष्टमुपहासं करोति यः ।
स व्रजत्यन्धतामिस्रं सार्धम् ऋक्षविडंबिना ॥
नगरद्वारलोष्टस्य यद्वत् स्यादुपयाचितम् ।
आदेशः तद्वदज्ञानां यः सत्यः स विभाव्यते ॥१६॥
संपत्त्या योजितादेशः तद्विच्छिन्नकथाप्रियः ।
मत्तः शास्त्रएकदेशेन त्याज्यः तादृग्महीक्षिता ॥१७॥
यः तु सम्यग्विजानाति होरागणितसंहिताः ।
अभ्यर्च्यः स नरेन्द्रेण स्वीकर्तव्यो जयैषणा ॥१८॥
न तत् सहस्रं करिणां वाजिनां च चतुर्गुणम् ।
करोति देशकालज्ञो यथा एको (यदेको) दैवचिन्तकः ॥१९॥

दुःस्वप्नदुर्विचिन्तितदुष्प्रेक्षितदुष्कृतानि कर्माणि ।
क्षिप्रं प्रयान्ति नाशम् शशिनः श्रुत्वा भसंवादम् ॥ २०॥
न तथा इच्छति भूपतेः पिता जननी वा स्वजनोऽथवा सुहृत् ।
स्वयशोऽभिविवृद्धये यथा हितमाप्तः सबलस्य दैववित् ॥ २१॥

---

अध्याय ३ आदित्यचाराध्यायः
आश्लेषार्धाद् दक्षिणमुत्तरमयनं रवेर्धनिष्ठा अद्यम् ।
नूनं कदाचिदासीद् येनोक्तम् पूर्वशास्त्रेषु ॥ १॥
सांप्रतमयनं सवितुः कर्कटकाद्यम् मृगादितश्चान्यत् ।
उक्ताभावो विकृतिः प्रत्यक्षपरीक्सणैः व्यक्तिः ॥ २॥
दूरस्थचिह्नवेधादुदयेऽस्तमयेऽपि वा सहस्रांशोः ।
छायाप्रवेशनिर्गमचिह्नैः वा मण्डले महति ॥ ३॥
अप्राप्य मकरमर्को विनिवृत्तो हन्ति सापराम् याम्याम् ।
कर्कटकमसंप्राप्तो विनिवृत्तश्चोत्तरां स एन्द्रीम् ॥ ४॥
उत्तरमयनमतीत्य व्यावृत्तः क्षेमसस्यवृद्धिकरः ।
प्रकृतिस्थश्चाप्येवं विकृतगतिः भयकृदुष्णांशुः ॥ ५॥
सतमस्कं पर्व विना त्वष्टा नामार्कमण्डलं कुरुते ।
स निहन्ति सप्त भूपान् जनांश्च शस्त्राग्निदुर्भिक्षैः ॥ ६॥
तामसकीलकसंज्ञा राहुसुताः केतवः त्रयः त्रिंशत् ।
वर्णस्थान आकारैः तान् दृष्ट्वाऽर्के फलं ब्रूयात् ॥ ७॥
ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः ।
ध्वांक्षकबन्धप्रहरणरूपाः पापाः शशांकेऽपि ॥ ८॥
तेषामुदये रूपाणि अंभः कलुषं रजोवृतं व्योम ।
नगतरुशिखरामर्दी (शिखरविमर्दी) सशर्करो मारुतश्चण्डः ॥ ९॥
ऋतुविपरीताः तरवो दीप्ता मृगपक्षिणो दिशां दाहाः ।
निर्घातमहीकंपादयो भवन्त्यत्र चोत्पाताः ॥ १०॥
न पृथक् फलानि तेषां शिखिकीलकराहुदर्शनानि यदि ।
तदुदयकारणमेषां केतुआदीनाम् फलं ब्रूयात् ॥ ११॥
यस्मिन् यस्मिन् देशे दर्शनमायान्ति सूर्यबिंबस्था ।
तस्मिं तस्मिन् व्यसनम् महीपतीनाम् परिज्ञेयम् ॥ १२॥
क्षुत्प्रम्लानशरीरा मुनयोऽपि उत्सृष्टधर्मसच्चरिताः ।
निर्मांसबालहस्ताः कृच्छ्रेणाऽऽयान्ति परदेशं (परदेशान्) ॥ १३॥
तस्करविलुप्तवित्ताः प्रदीर्घनिःश्वासमुकुलिताक्षिपुटाः ।
सन्तः सन्नशरीराः शोकोद्भववाष्प (बाष्प) रुद्धदृशः ॥ १४॥
क्षामा जुगुप्समानाः स्वनृपतिपरचक्रपीडिता मनुजाः ।
स्वनृपतिचरितं कर्म न (च) पुरा कृतं (पराकृतं, पुराकृतं) प्रब्रुवन्त्यन्ये ॥ १५॥
गर्भेष्वपि निष्पन्ना वारिमुचो न प्रभूतवारिमुचः ।
सरितो यान्ति तनुत्वं क्वचित् क्वचिज्जायते सस्यम् ॥ १६॥
दण्डे नरेन्द्रमृत्युः व्याधिभयं स्यात् कबन्धसंस्थाने (कवन्धसंस्थाने) ।
ध्वांक्षे च तस्करभयं दुर्भिक्षं कीलकेऽर्कस्थे ॥ १७॥
राजौपकरणरूपैश्छत्रध्वजचामरादिभिः विद्धः ।
राजान्यत्वकृदर्कः स्फुलिंगधूमादिभिः जनहा ॥ १८॥
एको दुर्भिक्षकरो द्व्याद्याः स्युः नरपतेः विनाशाय ।
सितरक्तपीतकृष्णैः तैः विद्धोऽर्कोऽनुवर्णघ्नः ॥ १९॥
दृश्यन्ते (दृश्यन्ते) च यतः ते रविबिंबस्यौत्स्थिता मोहौत्पाताः ।
आगच्छति लोकानां तेनैव भयं प्रदेशेन ॥ २०॥
ऊर्ध्वकरो दिवसकरः ताम्रः सेनापतिं विनाशयति ।
पीतो नरेन्द्रपुत्रं श्वेतः तु पुरोहितं हन्ति ॥ २१॥
चित्रोऽथवापि धूम्रो रविरश्मिर्व्याकुलां (व्याकुलां) करोत्यूर्धं (महीं) ।
तस्करशस्त्रनिपातैः यदि सलिलं नाशु पातयति ॥ २२॥
ताम्रः कपिलो वार्कः शिशिरे हरिकुंकुमच्छविश्च मधौ ।
आपाण्डुकनकवर्णो ग्रीष्मे वर्षासु शुक्लश्च ॥ २३॥
शरदि कमलोदराभो हेमन्ते रुधिरसन्निभः शस्तः ।
प्रावृट्काले स्निग्धः सर्वऋतुनिभोऽपि शुभदायी ॥ २४॥
रूक्षः श्वेतो विप्रान् रक्ताभः क्षत्रियान् विनाशयति ।
पीतो वैश्यान् कृष्णः ततो अपरान् शुभकरः स्निग्धः ॥ २५॥
ग्रीष्मे रक्तो भयकृद् वर्षास्वसितः करोत्यनावृष्टिम् ।
हेमन्ते पीतोऽर्कः करोति न चिरेण (अचिरेण) रोगभयम् ॥ २६॥
सुरचापपाटिततनुः नृपतिविरोधप्रदः सहस्रांशुः ।
प्रावृट्काले सद्यः करोति विमलद्युतिः वृष्टिम् ॥ २७॥
वर्षाकाले वृष्टिं करोति सद्यः शिरीषपुष्पाभः ।
शिखिपत्रनिभः सलिलं न करोति द्वादशाब्दानि ॥ २८॥
श्यामेऽर्के कीटभयं भस्मनिभे भयमुशन्ति परचक्रात् ।
यस्य ऋक्षे सच्छिद्रः तस्य विनाशः क्षितीशस्य ॥ २९॥
शशरुधिरनिभे भानौ नभस्तलस्थे भवन्ति संग्रामाः ।
शशिसदृशे नृपतिबधः (नृपतिवद्धः) क्षिप्रं चान्यो नृपो भवति ॥ ३०॥
क्षुत्मारकृत् घटनिभः खण्डो जनहा (नृपहा) विदीधितिः भयदः ।
तोरणरूपः पुरहा छत्रनिभो देशनाशाय ॥ ३१॥
ध्वजचापनिभे युद्धानि भास्करे वेपने च रूक्षे च ।
कृष्णा रेखा सवितरि यदि हन्ति ततो नृपं (नृपं ततः) सचिवः ॥ ३२॥
दिनकरं (दिवसकरं) उदयास्तसंस्थितमुदयसंस्थितं) उल्काशनिविद्युतो यदा हन्युः ।
नरपतिमरणं विन्द्यात् तदा अन्यराजप्रतिष्ठा (प्रतिष्ठां) च ॥ ३३॥
प्रतिदिवसमहिमकिरणः परिवेषी सन्ध्ययोः द्वयोः अथवा ।
रक्तोऽस्तमेति रक्तोदितश्च भूपं करोत्यन्यम् ॥ ३४॥
प्रहरणसदृशैः जलदैः स्थगितः सन्ध्याद्वयेऽपि रणकारी ।
मृगमहिषविहगखरकरभसदृशरूपैश्च भयदायी ॥ ३५॥
दिनकरकराभितापाद् ऋक्षमवाप्नोति सुमहतीम् पीडाम् ।
भवति तु पश्चात्शुद्धं कनकमिव हुताशपरितापात् ॥ ३६॥

दिवसकृतः प्रतिसूर्यो जलकृदुदग् दक्षिणे स्थितोऽनिलकृत् ।
उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा ॥ ३७ ॥
रुधिरनिभो वियत्यवनिपान्तरकरो न चिरात् ।
परुषरजोऽरुणीकृततनुः यदि वा दिनकृत् ॥ ३८ ॥
असितविचित्रनीलपरुषो जनघातकरः ।
खगमृगभैरवस्वररुतैश्च निशाद्युमुखे ॥ ३९ ॥
अमलवपुः अवक्रमण्डलः स्फुतविपुलामलदीर्घदीधितिः ।
अविकृततनुवर्णचिह्नभृज्जगति करोति शिवं दिवाकरः ॥ ४० ॥

---

अध्याय ४ चन्द्रचाराध्यायः ।
नित्यमधःस्थस्येन्दोः भाभिः भानोः सितं भवत्यर्धम् ।
स्वच्छायया अन्यदसितं कुंभस्यैव आतपस्थस्य ॥ १ ॥
सलिलमये शशिनि रवेः दीधितयो मूर्छिताः तमो नैशम् ।
क्षपयन्ति दर्पणौदरनिहिता (निहता) इव मन्दिरस्यान्तः ॥ २ ॥
त्यजतोऽर्कतलं शशिनः पश्चादवलंबते यथा शौक्ल्यम् ।
दिनकरवशात् तथा इन्दोः प्रकाशतेऽधः प्रभृत्युदयः ॥ ३ ॥
प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धिः ।
भवति शशिनोऽपराह्णे पश्चाद् भागे घटस्यैव
एन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य चायातः (वा यातः) ।
याम्येन वीजजलचरकाननहा वह्निभयदश्च ॥ ४ ॥
दक्षिणपार्श्वेन गतः शशी विशाखा अनुराधयोः पापः ।
मध्येन तु प्रशस्तः पितृदेव (पित्र्यस्य) विशाखयोश्चापि
षड अनागतानि पौष्णाद् द्वादश रौद्राग मध्ययोगीनि ।
ज्येष्ठाद्यानि नवर्क्षाणि उडुपतिना अतीत्य युज्यन्ते ॥ ५ ॥
उन्नतमीषच्छृंगं नौसंस्थाने विशालता चौक्ता ।
नाविकपीडा तस्मिन् भवति शिवं सर्वलोकस्य ॥ ६ ॥
अर्द्धोन्नते च लांगलमिति पीडा तदुपजीविनां तस्मिन् ।
प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिक्षं च ॥ ७ ॥
दक्षिणविषाणमर्धोन्नतं यदा दुष्टलांगलाख्यं तत् ।
पाण्ड्यनरेश्वरनिधनकृदुद्योगकरं बलानाम् च ॥ ८ ॥
समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवससदृशाः स्युः ।
दण्डवदुदिते पीडा गवां नृपश्चौग्रदण्डोऽत्र ॥ ९ ॥
कार्मुकरूपे युद्धानि यत्र तु ज्या ततो जयः तेषाम् ।
स्थानं युगमिति याम्योत्तरायतं भूमिकंपाय ॥ १० ॥
युगमेव याम्यकोट्यां किंचित् तुंगं स पार्श्वशायीइति
विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहं कुर्यात् ॥ ११ ॥
अभ्युच्छ्रायादेकं यदि शशिनोऽवान्मुखं भवेत्छृंगम् ।
आवर्जितमित्यसुभिक्षकारि तद् गोधनस्यापि ॥ १२ ॥
अव्युच्छिन्ना रेखा समन्ततो मण्डला च कुण्डाख्यम् ।
अस्मिन् माण्डलिकानां स्थानत्यागो नरपतीनाम् ॥ १३ ॥
प्रोक्तस्थानाभावादुदगुच्चः क्षेमवृद्धिवृष्टिकरः ।
दक्षिणतुंगश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः ॥ १४ ॥
शृंगेणएकेनेन्दुः (इन्दुं) विलीनमथवाप्यवान्मुखं शृंगं (अशृग्गं) ।
संपूर्णं चाभिनवं दृष्ट्वा एको जीविताद् भ्रश्येत् ॥ १५ ॥
संस्थानविधिः कथितो रूपाणि अस्माद् भवन्ति चन्द्रमसः ।
स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः ॥ १६ ॥
मध्यतनुः वज्राख्यः क्षुद्भयदः संभ्रमाय राज्ञां च ।
चन्द्रो मृदंगरूपः क्षेमसुभिक्षावहो भवति ॥ १७ ॥
ज्ञेयो विशालमूर्तिः नरपतिलक्ष्मीविवृद्धये चन्द्रः ।
स्थूलः सुभिक्षकारी प्रियधान्यकरः तु तनुमूर्तिः ॥ १८ ॥
प्रत्यन्तान् कुनृपांश्च हन्त्युडुपतिः शृंगे कुजेन आहते ।
शस्त्रक्षुद्भयकृद् यमेन शशिजेनावृष्टिदुर्भिक्षकृत् ।
श्रेष्ठान् हन्ति नृपान् महेन्द्रगुरुणा शुक्रेण चाल्पान् नृपान् ।
शुक्ले याप्यमिदं फलम् ग्रहकृतं कृष्णे यथोक्तागमम् ।
भिन्नः सितेन मगधान् यवनान् पुलिन्दान
नेपालभृंगिमरुकच्छ (मरुकुच्च) सुराष्ट्रमद्रान् ।
पांचालकैकयकुलूतकपुरुषादान
हन्यादुशीनरजनान् अपि सप्त मासान् ॥ १९ ॥
गान्धारसौवीरकसिन्धुकीरान् धान्यानि शैलान्
द्रविदाधिपांश्च ।
द्विजांश्च मासान् दश शीतरश्मिः सन्तापयेद् वाक्पतिना विभिन्नः ॥ २० ॥
उद्युक्तान् सह वाहनैः नरपतीं त्रैगर्तकान् मालवान
कौलिन्दान् गणपुंगवान् अथ शिबीनायोध्यकान् पार्थिवान् ।
हन्यात् कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यान् अपि
प्रालेयांशुरसृग्ग्रहे तनुगते षण्मासमर्यादया ॥ २१ ॥
यौधेयान् सचिवान् सकौरवान् प्रागीशान् अथ
चार्जुनायनान् ।
हन्यादर्कजभिन्नमण्डलः शीतांशुः दशमासपीडया ॥ २२ ॥
मगधान् मथुरां च पीडयेद् वेणायाश्च तटं शशांकजः ।
अपरत्र कृतं युगं वदेद् यदि भित्त्वा शशिनं विनिर्गतः ॥ २३ ॥
क्षेमारोग्यसुभिक्षनिनाशी शीतांशुः शिखिना यदि भिन्नः ।
कुर्यादायुधजीविविनाशं चौराणामधिकेन च पीडाम् ॥ २४ ॥
उल्कया यदा शशी ग्रस्त एव हन्यते ।
हन्यते तदा नृपो यस्य जन्मनि स्थितः ॥ २५ ॥
भस्मनिभः परुषोऽरुणमूर्तिः शीतकरः किरणैः परिहीणः ।
श्यावतनुः स्फुटितः स्फुरणो वा क्षुड्डमरा (क्षुड्समरा)
मयचौरभयाय ॥ २६ ॥
प्रालेयकुन्दकुमुदस्फटिकावदातो यत्नादिवाद्रिसुतया
परिमृज्य चन्द्रः ।
उच्चैः कृतो निशि भविष्यति मे शिवाय यो दृश्यते स
भविता जगतः शिवाय ॥ २७ ॥
शुक्ले पक्षे संप्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति वृद्धिं प्रजाश्च ।
हीने हानिः तुल्यता तुल्यतायां कृष्णे सर्वे तत्फलं व्यत्ययेन ॥ २८ ॥
यदि कुमुदमृणालहारगौरः तिथिनियमात् क्षयमेति वर्द्धते
वा ।

अविकृतगतिमण्डलांशुयोगी भवति नृणां विजयाय शीतरश्मिः ॥ २९॥

---

अध्याय ५ राहुचाराध्यायः
अमृतास्वादविशेषाच्छिन्नमपि शिरः किलासुरस्यैदम् ।
प्राणैः अपरित्यक्तं ग्रहतां यातं वदन्त्येके ॥ १॥
इन्दुअर्कमण्डलाकृतिः असितत्वात् किल न दृश्यते गगने ।
अन्यत्र पर्वकालाद् वरप्रदानात् कमलयोनेः ॥ २॥
मुखपुच्छविभक्तांगं भुजंगमाकारमुपदिशन्त्यन्ये ।
कथयन्त्यमूर्तमपरे तमोमयं सैंहिकेयाख्याख्यम् ॥ ३॥
यदि मूर्तो भविचारी शिरोऽथवा भवति मण्डली राहुः ।
भगणार्धेनान्तरितौ (तो) गृह्णाति कथं नियतचारः ॥ ४॥
अनियतचारः खलु चेदुपलब्धिः संख्यया कथं तस्य ।
पुच्छाननाभिधानोऽन्तरेण कस्मान् न गृह्णाति ॥ ५॥
अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा स गृह्णाति ।
मुखपुच्छान्तरसंस्थं स्थगयति कस्मान् न भगणार्धम् ॥ ६॥
राहुद्वयं यदि स्याद् ग्रस्तेऽस्तमितेऽथवा उदिते चन्द्रे ।
तत्समगतिनान्येन ग्रस्तः सूर्योऽपि दृश्यते ॥ ७॥
भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः ।
प्रग्रहणमतः पश्चान् नेन्दोः भानोश्च पूर्वार्धात् ॥ ८॥
वृक्षस्य स्वच्छाया यथा एकपार्श्वे (न) भवति दीर्घचया (दीर्घा च) ।
निशि निशि तद्वद् भूमेः आवरणवशाद् दिनेशस्य ॥ ९॥
सूर्यात् सप्तमराशौ यदि चौदग्दक्षिणेन नातिगतः ।
चन्द्रः पूर्वाभिमुखश्छायामौर्वीम् तदा विशति ॥ १०॥
चन्द्रोऽधःस्थः स्थगयति रविमंबुदवत् समागतः पश्चात् ।
प्रतिदेशमतश्चित्रं दृष्टिवशाद् भास्करग्रहणम् ॥ ११॥
आवरणं महदिन्दोः कुण्ठविषाणः ततोऽर्धसंच्छन्नः ।
स्वल्पम् रवेः यतोऽतः तीक्ष्णविषाणो रविः भवति ॥ १२॥
एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिः आचार्यैः ।
राहुः अकारणमस्मिन्न् इत्युक्तः शास्त्रसद्भावः ॥ १३॥
योऽसौअसुरो राहुः तस्य वरो ब्रह्मणाऽयमाज्ञप्तः ।
आप्यायनमुपरागे दत्तहुतांशेन ते भविता ॥ १४॥
तस्मिन् काले सान्निध्यमस्य तेनौपचर्यते राहुः ।
याम्योत्तरा शशिगतिः गणितेऽपि उपचर्यते तेन ॥ १५॥
न कथंचिदपि निमित्तैः ग्रहणं विज्ञायते निमित्तानि ।
अन्यस्मिन्न् अपि काले भवन्त्यथौत्पातरूपाणि ॥ १६॥
पंचग्रहसंयोगान् न किल ग्रहणस्य संभवो भवति ।
तैलं च जलेऽष्टम्यां न विचिन्त्यमिदं विपश्चिद्भिः ॥ १७॥
अवनत्याऽर्के ग्रासो दिग्ज्ञेया वलनया अवनत्या च ।
तिथ्यवसानाद् वेला करणे कथितानि तानि मया ॥ १८॥
षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः ।
ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः ॥ १९॥
ब्राह्मे द्विजपशुवृद्धिः क्षेमारोग्याणि (द्विजपशुवृद्धिक्षेमारोग्याणि) सस्यसंपत्च ।
तद्वत् सौम्ये तस्मिन् पीडा विदुषामवृष्टिश्च ॥ २०॥
एन्द्रे भूपविरोधः शारदसस्यक्षयो न च क्षेमम् ।
कौबेरेऽर्थपतीनामर्थविनाशः सुभिक्षं च ॥ २१॥
वारुणमवनीशाशुभमन्येषां क्षेमसस्यवृद्धिकरम् ।
आग्नेयं मित्राख्यं सस्यारोग्याभयांबुकरम् ॥ २२॥
याम्यं करोत्यवृष्टिं दुर्भिक्षं संक्षयं च सस्यानाम् ।
यदतः परं तदस्शुभं क्षुत्मारावृष्टिदं पर्व ॥ २३॥
वेलाहीने पर्वणि गर्भविपत्तिश्च शस्त्रकोपश्च ।
अतिवेले कुसुमफलक्षयो भयं सस्यनाशश्च ॥ २४॥
हीनातिरिक्तकाले फलमुक्तं पूर्वशास्त्रदृष्टत्वात् ।
स्फुटगणितविदः कालः कथंचिदपि नान्यथा भवति ॥ २५॥
यद्येकस्मिन् मासे ग्रहणं रविसोमयोः तदा क्षितिपाः ।
स्वबलक्षोभैः संक्षयमायान्त्यतिशस्त्रकोपश्च ॥ २६॥
ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ ।
सर्वग्रस्तौ दुर्भिक्षमरकदौ पापसन्दृष्टौ ॥ २७॥
अर्धोदितौपरक्तो नैकृतिकान् हन्ति सर्वयज्ञांश्च ।
अग्न्युपजीविगुणाधिकविप्राश्रमिणो युगेऽभ्युदितः (अयुगाभ्युदितः) ॥ २८॥
कर्षकपाखण्डि (पाषण्डि) वणिक्क्षत्रियबलनायकान् द्वितीयांशे (द्वितीयेऽंशे) ।
कारुकशूद्रम्लेच्छान् खतृतीयांशे समन्त्रिजनान् ॥ २९॥
मध्याह्ने नरपतिमध्यदेशहा शोभनश्च धान्यार्घः ।
तृणभुगमात्यान्तःपुरवैश्यघ्नः पंचमे खांशे ।
स्त्रीशूद्रान् षष्ठेऽंशे दस्युप्रत्यन्तहा अस्तमयकाले ।
यस्मिन् खांशे मोक्षः तत्प्रोक्तानां शिवं भवति ॥ ३०॥
द्विजनृपतीन् उदगयने विट्शूद्रान् दक्षिणायने हन्ति ।
राहुरुदगादिदृष्टः प्रदक्षिणं हन्ति विप्रादीन् ॥ ३१॥
म्लेच्छान् विदिक्स्थितो यायिनश्च हन्याद् धुताशसक्तांश्च ।
सलिलचरदन्तिघाती याम्येनौदग् गवामशुभः ॥ ३२॥
पूर्वेण सलिलपूर्णां करोति वसुधां समागतो दैत्यः ।
पश्चात् कर्षकसेवकबीजविनाशाय निर्दिष्टः ॥ ३३॥
पांचालकलिंगशूरसेनाः कांबोजौड्रकिरातशस्त्रवार्त्ताः ।
जीवन्ति च ये हुताशवृत्त्या ते पीडामुपयान्ति मेषसंस्थे ॥ ३४॥
गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः ।
पीडामुपयान्ति भास्करे ग्रस्ते शीतकरेऽथवा वृषे ॥ ३५॥
मिथुने प्रवरांगना नृपा नृपमात्रा बलिनः कलाविदः ।
यमुनातटजाः सबाह्लिका मत्स्याः सुह्मजनैः समन्विताः ॥ ३६॥
आभीरान् शबरान् सपह्लवान् मल्लान् मत्स्यकुरूंछकान् अपि ।
पांचालान् विकलांश्च पीडयत्यन्नां चापि निहन्ति कर्कटे ॥ ३७॥
सिंहे पुलिन्दगणमेकलसत्त्वयुक्तान् राजोपमान् नरपतीन् वनगोचरांश्च ।
षष्ठे तु सस्यकविलेखकगेयसक्तान् हन्त्यश्मकत्रिपुरशालियुतांश्च देशान् ॥ ३८॥

तुलाधरेऽवन्त्यपरान्त्यसाधून् वणिग्दशार्णान् मरुत (भरुक) कच्छपांश्च ।
अलिनि अथौदुंबरमद्रचोलान् द्रुमान् सयौधेयविषायुधीयान् ॥ ३९ ॥
धन्विनि अमात्यवरवाजिविदेहमल्लान् पांचालवैद्यवणिजो विषमायुधज्ञान् ।
हन्यान् मृगे तु झषमन्त्रिकुलानि नीचान् मन्त्रौषधीषु कुशलान् स्थविरायुधीयान् ॥ ४० ॥
कुंभेऽन्तर्गिरिजान् सपश्चिमजनान् भारोद्वहां तस्करान्
आभीरान् दरद आर्यसिंहपुरकान् हन्यात् तथा बर्बरान् ।
मीने सागरकूलसागरजलद्रव्याणि वन्यान् (मान्यान्) जनान् प्राज्ञान् वार्युपजीविनश्च भफलं कूर्मोपदेशाद् वदेत् ॥ ४१ ॥
सव्यापसव्यलेहग्रसननिरोधावमर्दनारोहाः ।
आघ्रातं मध्यतमः तमोऽन्त्य इति ते दश ग्रासाः ॥ ४२ ॥
सव्यगते तमसि जगज्जलप्लुतं भवति मुदितमभयं च ।
अपसव्ये नरपतितस्करावमर्दैः प्रजानाशः ॥ ४३ ॥
जिह्वोपलेढि (जिह्वेवलेढि) परितः तिमिरनुदो मण्डलं यदि स लेहः ।
प्रमुदितसमस्तभूता प्रभूततोया च तत्र मही ॥ ४४ ॥
ग्रसनमिति यदा त्र्यंशः पादो वा गृह्यतेऽथवा अपि अर्धम् ।
स्फीतनृपवित्तहानिः पीडा च स्फीतदेशानाम् ॥ ४५ ॥
पर्यन्तेषु गृहीत्वा मध्ये पिण्डीकृतं तमः तिष्ठेत् ।
स निरोधो विज्ञेयः प्रमोदकृत् सर्वभूतानाम् ॥ ४६ ॥
अवमर्दनमिति निःशेषमेव संछाद्य यदि चिरं तिष्ठेत् ।
हन्यात् प्रधानभूपान् प्रधानदेशांश (प्रधानदेशान् प्रधानभूपांश) च तिमिरमयः ॥ ४७ ॥
वृत्ते ग्रहे यदि तमः तत्क्षणमावृत्य दृश्यते भूयः ।
आरोहणमित्यन्योन्यमर्दनैः भयकरं राज्ञाम् ॥ ४८ ॥
दर्पण इवएकदेशे सबाष्प (सवाष्प) निःश्वासमारुतोपहतः ।
दृश्येत आघ्रातं तत् सुवृष्टिवृद्ध्यावहं जगतः ॥ ४९ ॥
मध्ये तमः प्रविष्टं वितमस्कं मण्डलं च यदि परितः
तन्मध्यदेशनाशं करोति कुक्ष्यामयभयं च ॥ ५० ॥
पर्यन्तेषुअतिबहुलं स्वल्पं मध्ये तमः ततोऽन्त्याख्ये ।
सस्यानामीतिभयं भयमस्मिं तस्कराणां च ॥ ५१ ॥
श्वेते क्षेमसुभिक्षं ब्राह्मणपीडां च निर्दिशेद् राहौ ।
अग्निभयमनलवर्णे पीडा च हुताशवृत्तीनाम् ॥ ५२ ॥
हरिते रोगौल्बणता (उल्वणता) सस्यानामीतिभिश्च विध्वंसः ।
कपिले शीघ्रगसत्त्वम्लेच्छध्वंशोऽथ दुर्भिक्षम् ॥ ५३ ॥
अरुणकिरणानुरूपे दुर्भिक्षावृष्तयो विहगपीडा ।
आधूम्रे क्षेमसुभिक्षमादिशेत्मन्दवृष्टिं च ॥ ५४ ॥
कापोतारुणकपिलश्यावाभे क्षुद्भयं विनिर्देश्यम् ।
कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च ॥ ५५ ॥
विमलकमणिपीताभो वैश्यध्वंसी भवेत् सुभिक्षाय ।
सार्चिष्मत्यग्निभयं गैरिकरूपे तु युद्धानि ॥ ५६ ॥
दूर्वाकाण्डश्यामे हारिद्रे वापि निर्दिशेत्मरकम् ।
अशनिभयसंप्रदायी पाटल (पाटलि) कुसुमोपमो राहुः ॥ ५७ ॥
पांशुविलोहितरूपः क्षत्रध्वंसाय भवति वृष्टेश्च ।
बालरविकमलसुरचापरूपभृत्शस्त्रकोपाय ॥ ५८ ॥
पश्यन् ग्रस्तं सौम्यो घृतमधुतैलक्षयाय राज्णां च ।
भौमः समरविमर्दं शिखिकोपं तस्करभयं च ॥ ५९ ॥
शुक्रः सस्यविमर्दं नानाक्लेशांश्च जनयति धरित्र्याम् ।
रविजः करोत्यवृष्टिं दुर्भिक्षं तस्करभयं च ॥ ६० ॥
यदशुभमवलोकनाभिरुक्तं ग्रहजनितं ग्रहणे प्रमोक्षणे वा ।
सुरपतिगुरुणावलोकिते तत्शममुपयाति जलैः इवाग्निः इद्धः ॥ ६१ ॥
ग्रस्ते क्रमान् निमित्तैः पुनः ग्रहो मासषद्कपरिवृद्ध्या ।
पवनौल्कापातरजः क्षितिकंपतमोऽशनिनिपातैः ॥ ६२ ॥
आवन्तिका जनपदाः कावेरीनर्मदातटाश्रयिणः ।
दृप्ताश्च मनुजपतयः पीड्यन्ते क्षितिसुते ग्रस्ते ॥ ६३ ॥
अन्तर्वेदीं सरयूं नेपालं पूर्वसागरं शोणम् ।
स्त्रीनृपयोधकुमारान् सह विद्वद्भिः बुधो हन्ति ॥ ६४ ॥
ग्रहणौपगते जीवे विद्वन्नृपमन्त्रिगजहयध्वंसः ।
सिन्धुतटवासिनामपि उदग्दिशं संश्रितानां च ॥ ६५ ॥
भृगुतनये राहुगते दाशेरक (दसेरकाः) कैकयाः सयौधेयाः ।
आर्यावर्ताः शिबयः स्त्रीसचिवगणाश्च पीड्यन्ते ॥ ६६ ॥
सौरे मरुभवपुष्करसौराष्ट्रिक (राष्ट्रा) धातवोऽर्बुदान्त्यजनाः ।
गोमन्तपारियात्राश्रिताः (गोमन्तः पारियात्रा) च नाशं व्रजन्त्याशु ॥ ६७ ॥
कार्त्तिक्यामनलोपजीविमगधान् प्राच्याधिपान् कोशलान् ।
कल्माषान् अथ शूरसेनसहितान् काशींश्च सन्तापयेत् ।
हन्याद् (हन्याद् च) आशु कलिंगदेशनृपतिं सामात्यभृत्यं तमो ।
दृष्टं क्षत्रियतापदं जनयति क्षेमं सुभिक्षान्वितम् ॥ ६८ ॥
काश्मीरकान् कौशलकान् सपुण्ड्रान् मृगांश्च हन्यादपरान्तकांश्च ।
ये सोमपाः तांश्च निहन्ति सौम्ये सुवृष्टिकृत् क्षेमसुभिक्षकृत्च ॥ ६९ ॥
पौषे द्विजक्षत्रजनोपरोधः ससेन्धवाख्याः कुकुरा विदेहाः ।
ध्वंसं व्रजन्त्यत्र च मन्दवृष्टिं भयं च विन्द्यादसुभिक्षयुतम् ॥ ७० ॥
माघे तु मातृपितृभक्तवसिष्ठगोत्रान
स्वाध्यायधर्मनिरतान् करिणः तुरंगान् ।
वंगांगकाशिमनुजांश्च दुनोति राहुः
वृष्टिं च कर्षकजनाभिमतां (अनुमतां) करोति ॥ ७१ ॥
पीडाकरं फाल्गुनमासि पर्व वंगाश्मकावन्तिक (वन्तक) मेकलानाम् ।
नृत्य (नृत्त) ज्ञसस्यप्रवरांगनानां धनुष्करक्षत्रतपस्विनां च ॥ ७२ ॥

चैत्र्यां (चैत्रे) तु चित्रकरलेखगेयसक्तान् ।
रूपोपजीविनिगमज्ञहिरण्यपण्यान् ।
पौण्ड्रौड्रकैकयजनान् अथ चाश्मकांश्च
तापः स्पृशत्यमरपोऽत्र विचित्रवर्षी ॥ ७३॥
वैशाखमासे (मासि) ग्रहणे विनाशमायान्ति कर्पासतिलाः समुद्गाः ।
इक्ष्वाकुयाउधेयशकाः कलिंगाः सोपप्लवाः (सोपद्रवाः) किन्तु सुभिक्षमस्मिन् ॥ ७४॥
ज्येष्ठे नरेन्द्रद्विजराजपत्न्यः सस्यानि वृष्टिश्च महागणाश्च ।
प्रध्वंसमायान्ति नराश्च सौम्याः साल्वैः समेताश्च निषादसंघाः ॥ ७५॥
आषाढपर्वणि उदपानवप्रनदीप्रवाहान् फलमूलवार्त्तान् ।
गान्धारकाश्मीरपुलिन्दचीनान् हतान् वदेद् मण्डलवर्षमस्मिन् ॥ ७६॥
काश्मीरान् सपुलिन्दचीनयवनान् हन्यात् कुरुक्षेत्रजान्
गान्धारान् अपि मध्यदेशसहितान् वृष्टो ग्रहः श्रावणे ।
कांबोजैकशफांश्च शारदमपि त्यक्त्वा यथोक्तान् इमान्
अन्यत्र प्रचुरान्नहृष्टमनुजैः धात्रीं करोत्यावृताम् ॥ ७७॥
कलिंगवंगान् मगधान् सुराष्ट्रान
म्लेच्छान् सुवीरान् दरदाश्मकांश (दरदाज्छकांश) च ।
स्त्रीणां च गर्भान् असुरो निहन्ति
सुभिक्षकृद् भाद्रपदेऽभ्युपेतः ॥ ७८॥
कांबोजचीनयवनान् सह शल्यहृद्भिः
बाल्हीक (वाल्हीक) सिन्धुतटवासिजनांश्च हन्यात् ।
आनर्त्त (आनर्त) पौण्ड्रभिषजश्च तथा किरातान्
दृष्टोऽसुरोऽश्वयुजि भूरिसुभिक्षकृग ॥ ७९॥
हनुकुक्षिपायुभेदा द्विः द्विः संछर्दनं च जरणं च ।
मध्यान्तयोश्च विदरणमिति दश शशिसूर्ययोः मोक्षाः ॥ ८०॥
आग्नेय्यामपगमनं दक्षिणहनुभेदसंज्ञितं शशिनः ।
सस्यविमर्दो मुखरुग् नृपपीडा स्यात् सुवृष्टिश्च ॥ ८१॥
पूर्वोत्तरेण वामो हनुभेदो नृपकुमारभयदायी ।
मुखरोगं शस्त्रभयं तस्मिन् विन्द्यात् सुभिक्षं च ॥ ८२॥
दक्षिणकुक्षिविभेदो दक्षिणपार्श्वेन यदि भवेन् मोक्षः ।
पीडा नृपपुत्राणामभियोज्या दक्षिणा रिपवः ॥ ८३॥
वामः तु कुक्षिभेदो यद्युत्तरमार्गसंस्थितो राहुः ।
स्त्रीणां गर्भविपत्तिः सस्यानि च तत्र मध्यानि ॥ ८४॥
नैरृतवायव्यस्थौ दक्षिणवामौ तु पायुभेदौ द्वौ ।
गुह्यरुग् अल्पा वृष्टिः द्वयोः तु राज्ञीक्षयो वामे ॥ ८५॥
पूर्वेण प्रग्रहणं कृत्वा प्राग् एव चापसर्पेत ।
संछर्दनमिति तत्क्षेमसस्यहार्दिप्रदं जगतः ॥ ८६॥
प्राक् प्रग्रहणं यस्मिन् पश्चादपसर्पणं तु तज्जरणम् ।
क्षुत्शस्त्रभयौद्विग्ना न (उद्विग्नाः क्व) शरणमुपयान्ति तत्र जनाः ॥ ८७॥
मध्ये यदि प्रकाशः प्रथमं तन्मध्यविदरणं नाम ।
अन्तःकोपकरं स्यात् सुभिक्षदं नातिवृष्टिकरम् ॥ ८८॥
पर्यन्तेषु विमलता बहुलं मध्ये तमोऽन्ति (अन्त) अदरणाख्यः ।
मध्याख्यदेशनाशः शारदसस्यक्षयश्चास्मिन् ॥ ८९॥
एते सर्वे मोक्षा वक्तव्या भास्करेऽपि किन्त्वत्र ।
पूर्वा दिक् शशिनि यथा तथा रवौ पश्चिमा कल्प्या ॥ ९०॥
मुक्ते सप्ताहन्तः पांशुनिपातोऽन्नसंक्षयं कुरुते ।
नीहारो रोगभयं भूकंपः प्रवरनृपमृत्युम् ॥ ९१॥
उल्का मन्त्रिविनाशं नानावर्णा घनाश्च भयमतुलम् ।
स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीडाम् ॥ ९२॥
परिवेषो रुक्पीडां दिग्दाहो नृपभयं च साग्निभयं ।
रूक्षो वायुः प्रबलश्चौरसमुत्थं भयं धत्ते ॥ ९३॥
निर्घातः सुरचापं दण्डश्च क्षुद्भयं सपरचक्रम् ।
ग्रहयुद्धे (ग्रहयुद्धं) नृपयुद्धं केतुश्च तदेव सन्दृष्टः ॥ ९४॥
अविकृतसलिलनिपातैः (निपाते) सप्ताहान्तः सुभिक्षमादेश्यम् ।
यगाशुभं ग्रहणजं तत् सर्वं नाशन् उपयाति ॥ ९५॥
सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद् ग्रहोऽर्कस्य ।
तत्रानयः प्रजानां दंपत्योः वैरमन्योन्यम् ॥ ९६॥
अर्कग्रहात् तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः ।
नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव ॥ ९७॥

---

अध्याय ६ भौमचाराध्यायः
यद्युदयर्क्षाद् वक्रं करोति नवमाष्टसप्तमर्क्षेषु ।
तद्वक्त्रां (तद्वक्रं) उष्णमुदये पीडाकरमग्निवार्त्तानाम् ॥ १॥
द्वादशदशमैकादशनक्षत्राद् वक्रिते कुजेऽश्रुमुखम् ।
दूषयति रसान् उदये करोति रोगान् अवृष्टिं च ॥ २॥
व्यालं त्रयोदशर्क्षागतुर्दशाद् वा विपच्यतेऽस्तमये ।
दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षं च ॥ ३॥
रुधिराननमिति वक्त्रं पंचदशात् षोडशाग विनिवृत्ते ।
तत्कालं मुखरोगं सभयं च सुभिक्षमावहति ॥ ४॥
असिमुशलं सप्तदशादष्टादशतोऽपि वा तदनुवक्रे ।
दस्युगुणेभ्यः पीदां करोत्यवृष्टिं सशस्त्रभयाम् ॥ ५॥
भाग्यार्यमा उदिते यदि निवर्तते वैश्वदैवते भौमः ।
प्राजापत्येऽस्तमितः त्रीन् अपि लोकान् निपीडयति ॥ ६॥
श्रवणौदितस्य वक्रं पुष्ये मूर्धाभिषिक्तपीडाकृत् ।
यस्मिन्न् ऋक्षेऽभ्युदितः तद्दिग्व्यूहान् जनान् हन्ति ॥ ७॥
मध्ये न यदि मघानां गतागतं लोहितः करोति ततः ।
पाण्ड्यो नृपो विनश्यति शस्त्रौद्योगाद् भयमवृष्टिं ॥ ८॥
भित्त्वा मघा (मघां) विशाखां भिन्दन् भौमः करोति दुर्भिक्षम् ।
मरकं करोति घोरं यदि भित्त्वा रोहिणीं याति ॥ ९॥
दक्षिणतो रोहिण्याः चरन् महीजोर्घवृष्टिनिग्रहकृत् ।
धूमायन् सशिखो वा विनिहन्यात् पारियात्रस्थान् ॥ १०॥
प्राजापत्ये श्रवणे मूले त्रिषु चौत्तरेषु (तिसृषूत्तरासु) शाक्रे च ।
विचरन् घननिवहानामुपघातकरः क्षमातनयः ॥ ११॥

चारोदयाः प्रशस्ताः श्रवणमघादित्यहस्तमूलेषु (मूलहस्तेषु) ।
एकपदाश्विशाखाप्राजापत्येषु च कुजस्य ॥१२॥
विपुलविमलमूर्तिः किंशुकाशोकवर्णः
स्फुटरुचिरमयूखः तप्तताम्रप्रभाभः ।
विचरति यदि मार्गं चौत्तरं मेदिनीजः
शुभकृदवनिपानां हार्दिदश्च प्रजानाम् ॥१३॥

---

अध्याय ७ बुधचाराध्यायः
नौत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम् ।
जलदहनपवनभयकृद् धान्यार्घक्षयविवृद्धौ वा ॥१॥
विचरन् श्रवणधनिष्ठाप्रजापत्येन्दुवैश्वदेवानि (विश्वदैवानि) ।
मृद्नन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् ॥२॥
रौद्रादीनि मघान्तानि उपाश्रिते चन्द्रजे प्रजापीडा ।
शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः ॥३॥
हस्तादीनि चरन् (विचरन्) षड्क्षाणि उपपीडयन् गवामशुभः ।
स्नेहरसार्घविवृद्धिं करोति चौर्वीं प्रभूतान्नाम् ॥४॥
आर्यम्णं हौतभुजं भद्रपदामुत्त्तरां यमेशं च ।
चन्द्रस्य सुतो निघ्नन् प्राणभृतां धातुसंक्षयकृत् ॥५॥
आश्विनवारुणमूलानि उपमृद्नन् रेवतीं च चन्द्रसुतः ।
पण्यभिषग्नौजीविकसलिलजतुरगौपघातकरः ॥६॥
पूर्वाद्यवृक्षत्रितयादेकमपीन्दोः सुतोऽभिमृद्नीयात् ।
क्षुत्शस्त्रतस्करामयभयप्रदायी चरन् जगतः ॥७॥
प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः ।
सप्त पराशरतन्त्रे नक्षत्रैः कीर्तिता गतयः ॥८॥
प्राकृतसंज्ञा वायव्ययाम्यपैतामहानि बहुलाश्च ।
मिश्रा गतिः प्रदिष्टा शशिशिवपितृभुजगदेवानि (दैवानि) ।
संक्षिप्तायां पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति ।
तीक्ष्णायां भद्रपदाद्वयं सशाक्राश्वयुक् पौष्णम् ॥९॥
योगान्तिकेति मूलं द्वे चाषाढे गतिः सुतस्येन्दोः ॥१०॥
घोरा श्रवणः त्वाष्ट्रअं वसुदैवं (देवं) वारुणं चैव ॥११॥
पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति ।
उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह ॥१२॥
चत्वारिंशत् (४०) त्रिंशद् (३०) द्विसमेता विंशति (२२)ः द्विनवकं च ।
नव मासार्धं दश चैकसंयुताः प्राकृताद्यानाम् ॥१३॥
प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयः क्षेमम् ।
संक्षिप्तमिश्रयोः मिश्रमेतदन्यासु विपरीतम् ॥१४॥
ऋज्वीअतिवक्रावक्रा विकला च मतेन देवलस्यैताः ।
पंचचतुर्द्व्येकाहा ऋज्व्यादीनां षडभ्यस्ताः ॥१५॥
ऋज्वी हिता प्रजानामतिवक्राऽर्घं गतिः विनाशयति ।
शस्त्रभयदा च वक्रा विकला भयरोगसंजननी ॥१६॥
पौषाषाढश्रावणवैशाखेष्विन्दुजः समाघेषु ।
वृष्तो भयाय जगतः शुभफलकृत् प्रोषितः तेषु ॥१७॥
कार्तिके (कार्त्तिके) ऽश्वयुजि वा यदि मासे दृश्यते तनुभवः शिशिरांशोः ।
शस्त्रचौरहुतभुग्गदतोयक्षुद्भयानि च तदा विदधाति
रुद्धानि सौम्येऽस्त्रगते (अस्तमिते) पुराणि यानि उद्गते
तानि उपयान्ति मोक्षम् ।
अन्ये तु पश्चादुदिते वदन्ति लाभः पुराणां भवति तज्ज्ञाः ॥१८॥
हेमकान्तिः अथवा शुकवर्णः सस्यकेन मणिना सदृशो वा ।
स्निग्धमूर्तिः अलघुश्च हिताय व्यत्यये न शुभकृत्शशिपुत्रः ॥१९॥

---

अध्याय ८ बृहस्पतिचाराध्यायः
नक्षत्रेण सहौदयमुपगच्छति येन देवपतिमन्त्री ।
तत्संज्ञं वक्तव्यं वर्षं मासक्रमेणैव ॥१॥
वर्षाणि कार्त्तिकादीनि आग्नेयाद् भद्वयानुयोगीनि ।
क्रमशः त्रिभं तु पंचममुपान्त्यमन्त्यं च यद् वर्षम् ॥२॥
शकटानलोपजीवकगोपीडा व्याधिशस्त्रकोपश्च ।
वृद्धिः तु रक्तपीतककुसुमानां कार्त्तिके वर्षे ॥३॥
सौम्येऽब्देऽनावृष्टिः मृगाखुशलभाण्डजैश्च सस्यवधः ।
व्याधिभयं मित्रैः अपि भूपानां जायते वैरम् ॥४॥
शुभकृज्जगतः पौषो निवृत्तवैराः परस्परं क्षितिपाः ।
द्वित्रिगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिश्च ॥५॥
पितृपूजापरिवृद्धिः माघे हार्दिश्च सर्वभूतानाम् ।
आरोग्यवृष्टिधान्यार्घसंपदो मित्रलाभश्च ॥६॥
फाल्गुनवर्षे विन्द्यात् क्वचित् क्वचित् क्षेमवृष्टिसस्यानि ।
दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चौग्राः ॥७॥
चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा मृदवः ।
वृद्धिश्च कोशधान्यस्य भवति पीडा च रूपवताम् ॥८॥
वैशाखे धर्मरता (धर्मपरा) विगतभयाः प्रमुदिताः प्रजाः सनृपाः ।
यज्ञक्रियाप्रावृत्तिः निष्पत्तिः सर्वसस्यानाम् ॥९॥
ज्यैष्ठे जातिकुलधनश्रेणीश्रेष्ठा नृपाः सधर्मज्ञाः ।
पीड्यन्ते धान्यानि च हित्वा कंगुं शमीजातिम् ॥१०॥
आषाढे जायन्ते सस्यानि क्वचिदवृष्टिः अन्यत्र ।
योगक्षेमं मध्यं व्यग्राश्च भवन्ति भूपालाः ॥११॥
श्रावणवर्षे क्षेमं सम्यक् सस्यानि पाकमुपयान्ति ।
क्षुद्रा ये पाखण्डाः (पाषण्डाः) पीड्यन्ते ये च तद्भक्ताः ॥१२॥
भाद्रपदे वल्लीजं निष्पत्तिं याति पूर्वसस्यं च ।
न भवत्यपरं सस्यं क्वचित् सुभिक्षं क्वचिग भयम् ॥१३॥
आश्वयुजेऽब्देऽजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमम् ।
प्राणचयः प्राणभृताम् सर्वेषामन्नबाहुल्यम् ॥१४॥
उदगारोग्यसुभिक्षक्षेमकरो वाक्पतिश्चरन् भानाम् ।
याम्ये तद्विपरीतो मध्येन तु मध्यफलदायी ॥१५॥
विचरन् भद्वयमिष्टः तत्सार्धं वत्सरेण मध्यफलः ।
सस्यानां विध्वंसी विचरेदधिकं यदि कदाचित् ॥१६॥
अनलभयमनलवर्णे व्याधिः पीते रणागमः श्यामे ।
हरिते च तस्करेभ्यः पीडा रक्ते तु शस्त्रभयम् ॥१७॥
धूमाभेऽनावृष्टिः त्रिदशगुरौ नृपवधो दिवा दृष्टे ।

विपुलेऽमले सुतारे रात्रौ दृष्टे प्रजाः स्वस्थाः ॥ १८॥
रोहिण्योऽनलभं च वत्सरतनुः नाभिः त्वषाढद्वयं
सार्पं हृत्पितृदैवतं च कुसुमं शुद्धैः शुभं तैः फलम् ।
देहे क्रूरनिपीडितेऽग्न्यनिलजं नाभ्यां भयं क्षुत्कृतं
पुष्ये मूलफलक्षयोऽथ हृदये सस्यस्य नाशो ध्रुवम् ॥ १९॥
गतानि वर्षाणि शकेन्द्रकालाद्
धतानि रुद्रैः गुणयेगतुर्भिः ।
नवाष्टपंचाष्ट (८५८९)युतानि कृत्वा
विभाजयेत् शून्यशरागरामैः (३७५०) ॥ २०॥
लब्धेन (फलेन) युक्तं शकभूपालं (भूपकालं)
संशोध्य षष्ट्या विषयैः विभज्य ।
युगानि नारायणपूर्वकाणि
लब्धानि शेषाः क्रमशः समाः स्युः ॥ २१॥
एकैकमब्देषु नवाहतेषु दत्त्वा पृथग् द्वादशकं क्रमेण ।
हृत्वा चतुर्भिः वसुदेवताद्यानि उड्नि शेषांशकपूर्वमब्दम् ॥ २२॥
विष्णुः सुरेज्यो बलभिद् धुताशः त्वष्टौत्तरप्रोष्ठपदाधिपश्च ।
क्रमाद् युगेशाः पितृविश्वसोम (सोमाः)
शक्रानलाख्याश्विभागाः प्रदिष्टाः ॥ २३॥
संवत्सरोऽग्निः परिवत्सरोऽर्क इदादिकः शीतमयूखमाली ।
प्रजापतिश्चाप्यनुवत्सरः स्यादिद्वत्सरः शैलसुतापतिश्च ॥ २४॥
वृष्टिः समाद्ये प्रमुखे द्वितीये प्रभूततोया कथिता तृतीये ।
पश्चाज्जलं मुंचति यगतुर्थं स्वल्पोदकं पंचममब्दमुक्तम् ॥ २५॥
चत्वारि मुख्यानि युगानि अथैषां विष्णु
इन्द्रजीवानलदैवतानि ।
चत्वारि मध्यानि च मध्यमानि चत्वारि चान्त्यानि
अधमानि
विन्द्यात् ॥ २६॥
आध्यं धनिष्टांशमभिप्रपन्नो माघे यदा यात्युदयं सुरेज्यः ।
षष्ट्यब्दपूर्वः प्रभवः स नाम्ना प्रपद्यते (प्रवर्तते) भूतहितः
तदाब्दः ॥ २७॥
क्वचित् त्ववृष्टिः पवनाग्निकोपः सन्तीतयः श्लेष्मकृताश्च
रोगाः ।
संवत्सरेऽस्मिन् प्रभवे प्रवृत्ते न दुःखमाप्नोति जनः तथापि ॥ २८॥
तस्माद् द्वितीयो विभवः प्रदिष्टः शुक्लः तृतीयः परतः
प्रमोदः ।
प्रजापतिश्चेति यथोत्तराणि शस्तानि वर्षाणि फलानि अथैषां
(चैषां) ॥ २९॥
निष्पन्नशालीक्षुयवादिसस्यां भयैः विमुक्तामुपशान्तवैराम् ॥ ३०॥
संहृष्टलोकां कलिदोषमुक्तां क्षत्रं तदा शास्ति च भूतधात्रीम् ॥ ३१॥
आद्यो अंगिराः श्रीमुखभावसाह्वौ युवा सुधातेति (युवाथ
धातेति) युगे द्वितीये ।
वर्षाणि पंचैव यथाक्रमेण त्रीणि अत्र शस्तानि समे परे द्वे ॥ ३२॥
त्रिष्वाद्यवर्षेषु (अंगिराद्येषु, आद्यवर्षेषु) निकामवर्षी
देवी निरातंकभयः (भयाः) च लोकः ।
अब्दद्वयेऽन्त्येऽपि समा सुवृष्टिः किन्त्वत्र रोगाः समरागमश
च ॥ ३३॥
शाक्रे युगे पूर्वमथईश्वराख्यं वर्षं द्वितीयं बहुधान्यम्
आहुः ।
प्रमाथिनं विक्रममपि अथान्यद् (अतोऽन्यद्) वर्षं च
विन्द्याद्
गुरुचारयोगात् ॥ ३४॥
आद्यं द्वितीयं च शुभे तु वर्षे कृतानुकारं कुरुतः प्रजानाम् ।
पापः प्रमाथी वृषविक्रमौ तु सुभिक्षदौ रोगभयप्रदौ च ॥ ३५॥
श्रेष्ठं च चतुर्थस्य युगस्य पूर्वं यगित्रभानुं कथयन्ति वर्षम् ।
मध्यं द्वितीयं तु सुभानुसन्ज्ञं रोगप्रदं मृत्युकरं नतं च (न
तग) ॥ ३६॥
तारणं तदनु भूरिवारिदं सस्यवृद्धिमुदिताति (मुदितं च)
पार्थिवम् ।
पंचमं व्ययमुशन्ति शोभनं मन्मथप्रबलमुत्सवाकुलम् ॥ ३७॥
त्वाष्ट्रे युगे सर्वजिदाद्य उक्तः संवत्सरोऽन्यः खलु
सर्वधारी ।
तस्माद् विरोधी विकृतः खरश्च शस्तो द्वितीयोऽत्र भयाय
शेषाः ॥ ३८॥
नन्दनोऽथ विजयो जयः तथा मन्मथोऽस्य परतश्च दुर्मुखः ।
कान्तमत्र युग आदितः त्रयं मन्मथः समफलोऽधमोऽपरः ॥ ३९॥
हेमलंब इति सप्तमे युगे स्याद् विलंबि परतो विकारि च ।
शर्वरीति तदनु प्लवः स्मृतो वत्सरो गुरुवशेन पंचमः ॥ ४०॥
ईतिप्राया (इतिप्रायः) प्रचुरपवना वृष्टिः अब्दे तु पूर्वे
मन्दं सस्यं न बहुसलिलं वत्सरेऽतो द्वितीये ।
अत्युद्वेगः प्रचुरसलिलः स्यात् तृतीयश्चतुर्थो
दुर्भिक्षाय प्लव इति ततः शोभनो भूरितोयः ॥ ४१॥
वैश्वे युगे शोकहृद् (शोभकृद्) इत्यथाद्यः संवत्सरोऽतः
शुभकृद् द्वितीयः ।
क्रोधी तृतीयः परतः क्रमेण विश्वावसुश्चेति पराभवश्च ॥ ४२॥
पूर्वापरौ प्रीतिकरौ प्रजानामेषां तृतीयो बहुदोषदोऽब्दः ।
अन्त्यौ समौ किन्तु पराभवेऽग्निः शस्त्रामयार्तिः
द्विजगोभयं च ॥ ४३॥
आद्यः प्लवंगो नवमे युगेऽब्दः स्यात् कीलकोऽन्यः परतश्च
सौम्यः ।

साधारणो रोधकृर्दित्यथैवं शुभपदौ (अथाब्दः शुभप्रदौ) कीलकसौम्यसंज्ञौ ॥ ४४॥
कष्टः प्लवंगो बहुशः प्रजानां साधारणेऽल्पं जलमीतयश्च ।
यः पंचमो रोधकृदित्यथावश्चित्रम् जलम् तत्र च सस्यसंपत् ॥ ४५॥
इन्द्राग्निदैवं दशमं युगं यत्तत्राद्यवर्षं (यत् तराद्यमब्दं) परिधाविसंज्ञम् ।
प्रमादिनं विक्रममपि अतोऽन्यत् (प्रमाद्यथानन्दमतः परं यत्) ।
स्याद् राक्षसं चानलसंज्ञितम् च ॥ ४६॥
परिधाविनि मध्यदेशनाशो नृपहानिः जलमल्पमग्निकोपः ।
अलसः तु जनः प्रमादिसंज्ञे डमरं रक्तकपुष्पबीजनाशः ॥ ४७॥
विक्रमः (तत्परः) सकललोकनन्दनो राक्षसः क्षयकरोऽनलः तथा ।
ग्रीष्मधान्यजननोऽत्र राक्षसो वह्निकोपमरकप्रदो ऽनलः ॥ ४८॥
एकादशे पिंगलकालयुक्तसिद्धार्थरौद्राः खलु दुर्मतिश्च ।
आद्ये तु व्षृटिः महती सचौरा श्वासो हनूकंपयुतश्च कासः ॥ ४९॥
यत् कालयुक्तं तदनेकदोषं सिद्धार्थसंज्ञे बहवो गुणाश्च ।
रौद्रोऽतिरौद्रः क्षयकृत् प्रदिष्टो यो दुर्मतिः मध्यमवृष्टिकृत् सः ॥ ५०॥
भाग्ये युगे दुन्दुभिसंज्ञमाद्यं सस्यस्य वृद्धिं महतीं करोति ।
अंगारसंज्ञं (उद्गारिसंज्ञं) तदनु क्षयाय नरेश्वराणां विषमा च वृष्टिः ॥ ५१॥
रक्ताक्षमब्दं कथितं तृतीयं तस्मिन् भयं दंष्ट्रिकृतं गदाश्च ।
क्रोधं बहुक्रोधकरं चतुर्थं राष्ट्राणि शून्यीकुरुते विरोधैः ॥ ५२॥
क्षयमिति युगस्यान्त्यस्यान्त्यं बहुक्षयकारकं
जनयति भयं तद्धिप्राणां कृषीबलवृद्धिदम् ।
उपचयकरं विट्शूद्राणां परस्वहृतां तथा
कथितमखिलं षष्ट्यब्दे यत् तदत्र समासतः ॥ ५३॥
अकलुषांशुजटिलः पृथुमूर्तिः कुमुदकुन्दकुसुमस्फटिकाभः ।
ग्रहहतो न यदि सत्पथवर्ती हितकरो (हतकिरो) ऽमरगुरुः मनुजानाम् ॥ ५४॥

---

अध्याय ९ शुक्रचाराध्यायः
नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः ।
अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद् वीथयः कथिताः ॥ १॥
नागा तु पवनयाम्यानलानि पैतामहात् त्रिभाः तिस्रः ।
गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भद्रपदे ॥ २॥
जारद्गव्यां श्रवणात् त्रिभं मृगाख्या त्रिभं तु मैत्राद्यम् ।
हस्तविशाखात्वाष्ट्राणि अजैत्यषाढाद्वयं दहना ॥ ३॥
तिस्रः तिस्रः तासां क्रमादुदन्मध्ययाम्यमार्गस्थाः ।
तासामपि उत्तरमध्यदक्षिणेन स्थितैकैका (दक्षिनावस्तितैकैका) ॥ ४॥
वीथीमार्गान् अपरे कथयन्ति यथास्थितान् भमार्गस्य ।
नक्षत्राणां तारा याम्योत्तरमध्यमाः तद्वत् ॥ ५॥
उत्तरमार्गो याम्यादि निगदितो मध्यमः तु भाग्याद्यः ।
दक्षिणमार्गो आषाढादि कैश्चिदेवं कृवा मार्गाः ॥ ६॥
ज्यौतिषं (ज्योतिसं) आगमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेवा विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥ ७॥
उत्तरवीथिषु शुक्रः सुभिक्षशिवकृद् गतोऽस्तमुदयम् च (वा) ।
मध्यासु मध्यफलदः कष्टफलो दक्षिणस्थासु ॥ ८॥
अत्युत्तमोत्तमोनं सममध्यन्यूनमधमकष्टफलम् ।
कष्टतरं (तमं) सौम्याद्यासु वीथिषु यथाक्रमं ब्रूयात् ॥ ९॥
भरणीपूर्वं मण्डलम् ऋक्षचतुष्कं सुभिक्षकरमाद्यम् ।
वंगांगमहिषबाह्लिक (वाह्लिक) कलिंगदेशेषु भयजननम् ॥ १०॥
अत्रो उदितमारोहेद् ग्रहोऽपरो यदि सितं ततो हन्यात् ।
भद्राश्वशूरसेनकयौधेयककोटिवर्षनृपान् ॥ ११॥
भचतुष्टयमार्द्राद्यं द्वितीयममितांबुसस्यसंपत्त्यै ।
विप्राणामशुभकरं विशेषतः क्रूरचेष्टानाम् ॥ १२॥
अन्येनात्राक्रान्ते म्लेच्छाटविकश्व (काश्व) जीविगोमन्तान् ।
गोनर्दनीचशूद्रान् वैदेहांश्चानयः स्पृशति ॥ १३॥
विचरन् मघादिपंचकमुदितः सस्यप्रणाशकृत्शुक्रः ।
क्षुत्तस्करभयजननो नीचोन्नतिसंकरकरश्च ॥ १४॥
पित्र्याद्येऽवष्टंभो हन्त्यन्येनाविकान् शबरशूद्रान् ।
पुण्ड्रापरान्त्यशूलिकवनवासिद्रविडसामुद्रान् ॥ १५॥
स्वात्याद्यं भत्रितयं मण्डलमेतगतुर्थमभयकरम् ।
ब्रह्मक्षत्रसुभिक्षाभिवृद्धये मित्रभेदाय ॥ १६॥
अत्राक्रान्ते मृत्युः किरातभर्तुःपिनष्टि चैक्ष्वाकून् ।
प्रत्यन्तावन्तिपुलिन्दतंगणान् शूरसेनांश्च ॥ १७॥
ज्येष्ठाद्यं पंचर्क्षं क्षुत्तस्कररोगदम् प्रबाधयते ।
काश्मीराश्मकमत्स्यान् सचारुदेवीन् अवन्तींश्च ॥ १८॥
अत्रारोहेद् द्रविडाभीरांबष्ठ (आरोहेऽत्राभीरान् द्रविडांबष्ठ) त्रिगर्तसौराष्ट्रान् ।
नाशयन्ति सिन्धुसौवीरकांश्च काशीश्वरस्य वधः ॥ १९॥
षष्ठं षण्नक्षत्रं शुभमेतन् मण्डलं धनिष्ठाद्यम् ।
भूरिधनगोकुलाकुलमनल्पधान्यं क्वचित् सभयम् ॥ २०॥
अत्रारोहेच् (आरोहे) शूलिकगान्धारावन्तयः प्रपीड्यन्ते ।
वैदेहवधः प्रत्यन्तयवनशकदासपरिवृद्धिः ॥ २१॥
अपरस्यां स्वात्याद्यं ज्येष्ठाद्यं चापि मण्डलं शुभदम् ।
पित्र्याद्यं पूर्वस्यां शेषाणि यथोक्तफलदानि ॥ २२॥
दृष्तोऽनस्तमिते (ऽनस्तगतेऽर्के) भयकृत् क्षुद्रोगकृत् समस्तमहः ।
अर्धदिवसे (दिवसं) च सेन्दुः नृपबलपुरभेदकृत्शुक्रः ॥ २३॥
भिन्दन् गतोऽनलर्क्षं कूलातिक्रान्तवारिवाहाभिः ।
अव्यक्ततुंगनिम्ना समा सरिद्भिः भवति धात्री ॥ २४॥
प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा ।

केशास्थिशकलशबला कापालमिव व्रतं धत्ते ॥ २५ ॥
सौम्योपगतो रससस्यसंक्षयायोशनाः समुद्दिष्टः ।
आर्द्रागतः तु कोशलकलिंगहा सलिलनिकरकरः ॥ २६ ॥
अश्मकवैदर्भाणां पुनः वसुस्थे सिते महाननयः ।
पुष्ये पुष्टा वृष्टिः विद्याधरगणविमर्दश्च ॥ २७ ॥
आश्लेषासु भुजंगमदारुणपीडावहश्चरन् शुक्रः ।
भिन्दन् मघां महामात्रदोषकृद् भूरिवृष्टिकरः ॥ २८ ॥
भाग्ये शबरपुलिन्दप्रध्वंसकरोऽंबुनिवहमोक्षाय ।
आर्यम्णे कुरुजांगलपांचालघ्नः सलिलदायी ॥ २९ ॥
कौरवचित्रकराणां हस्ते पीडा जलस्य च निरोधः ।
कूपकृदण्डजपीडा चित्रास्थे शोभना वृष्टिः ॥ ३० ॥
स्वातौ प्रभूतवृष्टिः दूतवणिग्नाविकान् स्पृशत्यनयः ।
एन्द्राग्नेऽपि सुवृष्टिः वणिजां च भयं विजानीयात् ॥ ३१ ॥
मैत्रे क्षत्रविरोधो ज्येष्ठायां क्षत्रमुख्यसन्तापः ।
मौलिकभिषजाम् मूले त्रिष्वपि चैतेष्वनावृष्टिः ॥ ३२ ॥
आप्ये सलिलजपीडा विश्वेशे व्याधयः प्रकुप्यन्ति ।
श्रवणे श्रवणव्याधिः पाखण्डि (पाषण्दि) भयं धनिष्ठासु ॥ ३३ ॥
शतभिषजि शौण्डिकानामजैकभे (अजैकपे) द्यूतजीविनां पीडां (पीडा) ।
कुरुपांचालानामपि करोति चास्मिन् सितः सलिलम् ॥ ३४ ॥
आहिर्बुधिने फलमूलतापकृद् यायिनाम् च रेवत्याम् ।
अश्विन्यां हयपानां याम्ये तु किरातयवनानाम् ॥ ३५ ॥
चतुर्दशीं पंचदशीं (चतुर्दशे पंचदशे तथाष्टमे)-
तमिस्रपक्षस्य तिथिं (तिथौ) भृगोः सुतः ।
यदा व्रजेद् दर्शनमस्तमेति वा तदा मही वारिमयीव लक्ष्यते ॥ ३६ ॥
गुरुः भृगुश्चापरपूर्वकाष्ठयोः परस्परं सप्तमराशिगौ यदा ।
तदा प्रजा रुग्भयशोकपीडिता न वारि पश्यन्ति पुरन्दरोज्झितम् ॥ ३७ ॥
यदा स्थिता जीवबुधारसूर्यजाः सितस्य
सर्वेऽग्रपथानुवर्तिनः ।
नृनागविद्याधरसंगराः तदा भवन्ति वाताश्च
समुच्छ्रितान्तकाः ॥ ३८ ॥
न मित्रभावे सुहृदो व्यवस्थिताः क्रियासु सम्यग् न रता द्विजातयः ।
न चाल्पमपि अंबु ददाति वासवो भिनत्ति वज्रेण शिरांसि भूभृताम् ॥ ३९ ॥
शनैश्चरे म्लेच्छविडालकुञ्जराः खरा
महिष्योऽसितधान्यशूकराः ।
पुलिन्दशूद्राश्च सदक्षिणापथाः क्षयं व्रजन्त्यक्षिमरुद्गदौद्भवैः ॥ ४० ॥
निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजां (प्रजा)
हुताशशस्त्रक्षुदवृष्टितस्करैः ।
चराचरं व्यक्तमथौत्तरापथं दिशोऽग्निविद्युद्रजसा च पीड्येत् ॥ ४१ ॥
बृहस्पतौ हन्ति पुरःस्थिते सितः सितं समस्तं
द्विजगोसुरालयान् ।
दिशं च पूर्वां करकासृजोऽंबुदा गले गदा भूरि भवेग
शारदम् ॥ ४२ ॥
सौम्योऽस्तोदयोः पुरो भृगुसुतस्यावस्थितः तोयकृद्
रोगान् पित्तजकामलांश (कामलां कामलांशोः कामलाः) च
कुरुते पुष्णाति च ग्रैष्मिकान् (ग्रैष्मिकं) ।
हन्यात् प्रव्रजिताग्निहोत्रिकभिषग्रंगोपजीव्यान् हयान्
वैश्यान् गाः सह वाहनैः नरपतीन् पीतानि पश्चाद् दिशम्
॥ ४३ ॥
शिखिभयमनलाभे शस्त्रकोपश्च रक्ते
कनकनिकषगौरे व्याधयो दैत्यपूज्ये ।
हरितकपिलरूपे श्वासकासप्रकोपः
पतति न सलिलं खाद् भस्मरूक्षासिताभे ॥ ४४ ॥
दधिकुमुदशशांकान्तिभृत् स्फुटविकसत्किरणो बृहत्तनुः ।
सुगतिः अविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः ॥ ४५ ॥

---

अध्याय १० शनैश्चरचाराध्यायः
श्रवणानिलहस्तार्द्राभरणीभाग्योपगः सुतोऽर्कस्य ।
प्रचुरसलिलोपगूढां करोति धात्रीं यदि स्निग्धः ॥ १ ॥
अहिवरुणपुरन्दरदैवतेषु सुक्षेमकृन् न चाति जलम् ।
क्षुत्शस्त्रावृष्टिकरो मूले प्रत्येकमपि वक्ष्ये ॥ २ ॥
तुरगतुरगोपचारककविवैद्यामात्यहार्कजोऽश्विगतः ।
याम्ये नर्तकवादकगेयज्ञक्षुद्रनैकृतिकान् ॥ ३ ॥
बहुलास्थे पीड्यन्ते सौरेऽग्न्युपजीविनश्चमूपाश्च ।
रोहिण्यां कोशलमद्रकाशिपंचालशाकटिकाः ॥ ४ ॥
मृगशिरसि वत्सयाजकयजमानार्यजनमध्यदेशाः च ।
रौद्रस्थे पारतरमठास्तैलिकरजक (पारतरातैलिकरजक)
चौराश्च ॥ ५ ॥
आदित्ये पांचनदप्रत्यन्तसुराष्ट्रसिन्धुसौवीराः ।
पुष्ये घाण्ठिकघौषिकयवनवणिक्कितवकुसुमानि ॥ ६ ॥
सार्पे जलरुहसर्पाः पित्र्ये बाह्लीकचीनगान्धाराः ।
शूलिकपारतवैश्याः कोष्ठागाराणि वणिजश्च ॥ ७ ॥
भाग्ये रसविक्रयिणः पण्यस्त्रीकन्यकामहाराष्ट्राः ।
आर्यम्णे नृपगुडलवणभिक्षुकांबूनि तक्षशिला ॥ ८ ॥
हस्ते नापितचाक्रिकचौरभिषक्सूचिका द्विपग्राहाः ।
बन्धक्यः कौशलका मालाकाराश्च पीड्यन्ते ॥ ९ ॥
चित्रास्थे प्रमदाजनलेखकचित्रज्ञचित्रभाण्डानि ।
स्वातौ मागधचरदूतसूतपोतप्लवनटाद्याः ॥ १० ॥
एन्द्राग्नाख्ये त्रैगर्तचीनकौलूतकुंकुमं लाक्षा ।
सस्यानि अथ माञ्जिष्ठं कौसुंभं च क्षयं याति ॥ ११ ॥
मैत्रे कुलूततंगणखसकाश्मीराः समन्त्रिचक्रचराः ।
उपतापं यान्ति च घाण्टिका विभेदश्च मित्राणाम् ॥ १२ ॥
ज्येष्ठासु नृपपुरोहितनृपसत्कृतशूरगणकुलश्रेण्यः ।
मूले तु काशिकोशलपांचालफलौषधीयोधाः ॥ १३ ॥
आप्ये अंगवंगकौशलगिरिव्रजा मगधपुण्ड्रमिथिलाश्च ।

उपतापं यान्ति जना वसन्ति ये ताम्रलिप्त्यां च ॥१४॥
विश्वेश्वरेऽर्कपुत्रश्चरन् दशार्णान् निहन्ति यवनांश्च ।
उज्जयिनीं शबरान् पारियात्रिकान् कुन्तिभोजांश्च ॥१५॥
श्रवणे राजाधिकृतान् विप्राग्र्यभिषक्पुरोहितकलिंगान् ।
वसुभे मगधेशजयो वृद्धिश्च धनेष्वधिकृतानाम् ॥१६॥
साजे शतभिषजि भिषक्कविशौण्डिकपण्यनीतिवृत्तीनां
(वार्त्तानां) ।
आहिर्बुध्न्ये नद्यो यानकराः स्त्रीहिरण्यं च ॥१७॥
रेवत्यां राजभृताः क्रौंचद्वीपाश्रिताः शरत्सस्यम् ।
शबराश्च निपीड्यन्ते यवनाश्च शनैश्चरे चरति ॥१८॥
यदा विशाखासु महेन्द्रमन्त्री सुतश्च भानोः दहनर्क्षयातः ।
तदा प्रजानामनयोऽतिघोरः पुरप्रभेदो गतयोः भमेकम् ॥
१९॥
अण्डजहा रविजो यदि चित्रः क्षुद्भयकृद् यदि पीतमयूखः ।
शस्त्रभयाय च रक्तसवर्णो भस्मनिभो बहुवैरकरश्च ॥२०॥
वैदूर्यकान्तिविमलः शुभकृत् प्रजानां
बाणातसीकुसुमवर्णनिभश्च शस्तः ।
यं चापि (पंचापि) वर्णमुपगच्छति तत्सवर्णान
सूर्यात्मजः क्षयतीति मुनिप्रवादः ॥२१॥

---

अध्याय ११ केतुचाराध्यायः
गार्गीयं शिखिचारं पाराशरमसितदेवलकृतं च ।
अन्यांश्च बहून् दृष्ट्वा क्रियतेऽयमनाकुलश्चारः ॥१॥
दर्शनमस्तमयो वा न गणितविधिनास्य शक्यते ज्ञातुम् ।
दिव्यान्तरिक्षभौमाः त्रिविधाः स्युः केतवो यस्मात् ॥२॥
अहुताशेऽनलरूपं यस्मिं तत्केतुरूपमेवोक्तम् ।
खद्योतपिशाचालयमणिरत्नादीन् परित्यज्य ॥३॥
ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरिक्षाः ते ।
दिव्या नक्षत्रस्था भौमाः स्युः अतोऽन्यथा शिखिनः ॥४॥
शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् ।
बहुरूपमेकमेव प्राह मुनिः नारदः केतुम् ॥५॥
यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम् ।
उदयास्तमयैः स्थानैः स्पर्शैः अधूमनैः वर्णैः ।
यावन्त्यहानि दृश्यो मासाः तावन्त एव फलपाकः ।
मासैः अब्दांश्च वदेत् प्रथमात् पक्षत्रयात् परतः ॥६॥
ह्रस्वः तनुः प्रसन्नः स्निग्धः त्वृजुः अचिरसंस्थितः शुक्लः
।
उदितोऽथवाभिवृष्टः (वाप्यभिदृष्टः) सुभिक्षसौख्यावहः केतुः
॥७॥
उक्तविपरीतरूपो न शुभकरो धूमकेतुरुत्पन्नः ।
इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो वा ॥८॥
हारमणिहेमरूपाः किरणाख्याः पंचविंशतिः सशिखाः ।
प्रागपरदिशोः दृश्या नृपतिविरोधावहा रविजाः ॥९॥
शुकदहनबन्धुजीवकलाक्षाक्षतजोपमा हुताशसुताः ।
आग्नेय्यां दृश्यन्ते तावन्तः तेऽपि शिखिभयदाः ॥१०॥
वक्रशिखा मृत्युसुता रूक्षाः कृष्णाश्च तेऽपि तावन्तः ।
दृश्यन्ते याम्यायां जनमरकावेदिनः ते च ॥११॥
दर्पणवृत्ताकारा विशिखाः किरणान्विता धरातनयाः ।
क्षुद्भयदा द्वाविंशतिः ऐशान्यामंबुतैलनिभाः ॥१२॥
शशिकिरणरजतहिमकुदकुमुन्दकुसुमोपमाः सुताः शशिनः ।
उत्तरतो दृश्यन्ते त्रयः सुभिक्षावहाः शिखिनः ॥१३॥
ब्रह्मसुत एक एव त्रिशिखो वर्णैः त्रिभिः युगान्तकरः ।
अनियतदिक्संप्रभवो विज्ञेयो ब्रह्मदण्डाख्यः ॥१४॥
शतमभिहितमेकसमेतमेतदेकेन विरहितानि अस्मात् ।
कथयिष्ये केतूनां शतानि नव लक्षणैः स्पष्टैः ॥१५॥
सौम्यैशान्योरुदयं शुक्रसुता यान्ति चतुरशीत्याख्याः ।
विपुलसिततारकाः ते स्निग्धाश्च भवन्ति तीव्रफलाः ॥१६॥
स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः शनैश्चरांगरुहाः ।
अतिकष्टफला दृश्याः सर्वत्रैते कनकसंज्ञाः ॥१७॥
विकचा नाम गुरुसुताः सितएकताराः शिखापरित्यक्ताः ।
षष्टिः पंचभिः अधिका स्निग्धा याम्याश्रिताः पापाः ॥१८॥
नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला यथेष्टदिक्प्रभवाः ।
बुधजाः तस्करसंज्ञाः पापफलाः त्वेकपंचाशत् ॥१९॥
क्षतजानलानुरूपाः त्रिचूलताराः कुजात्मजाः षष्टिः ।
नाम्ना च कौंकुमाः ते सौम्याशासंस्थिताः पापाः ॥२०॥
त्रिंशत्यधिका राहोः ते तामसकीलका इति ख्याताः ।
रविशशिगा दृश्यन्ते तेषां फलमर्कचारोक्तम् ॥२१॥
विंशत्यधिकमन्यत्शतमग्नेः विश्वरूपसंज्ञानाम् ।
तीव्रानलभयदानां ज्वालामालाकुलतनूनाम् ॥२२॥
श्यामारुणा विताराश्चामररूपा विकीर्णदीधितयः ।
अरुणाख्या वायोः सप्तसप्ततिः पापदाः परुषाः ॥२३॥
तारापुञ्जनिकाशा गणका नाम प्रजापतेः अष्टौ ।
द्वे च शते चतुरधिके चतुरस्रा (चतुरश्रा) ब्रह्मसन्तानाः ॥
२४॥
कंका नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थानाः ।
शशिवत्प्रभासमेताः तीव्रफलाः केतवः प्रोक्ताः ॥२५॥
षण्णवतिः कालसुताः कबन्धसंज्ञाः कबन्धसंस्थानाः ।
पुण्ड्रा (चण्डा) भयप्रदाः स्युः विरूपताराश्च ते शिखिनः ॥
२६॥
शुक्रविपुलएकतारा नव विदिशां केतवः समुत्पन्नाः ।
एवं केतुसहस्रं विशेषमेषामतो वक्ष्ये ॥२७॥
उदगायतो महान् स्निग्धमूर्तिः अपरोदयी वसाकेतुः ।
सद्यः करोति मरकं सुभिक्षमपि उत्तमं कुरुते ॥२८॥
तल्लक्षणोऽस्थिकेतुः स तु रूक्षः क्षुद्भयावहः प्रोक्तः ।
स्निग्धः तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय ॥२९॥
दृश्योऽमावास्यायां कपालकेतुः सधूम्ररश्मिशिखः ।
प्राग्नभसोऽर्धविचारी क्षुत्मरकावृष्टिरोगकरः ॥३०॥
प्राग् वैश्वानर (वश्वानर, वैस्वानर) मार्गे शूलाग्रः
श्यावरूक्षताम्रार्चिः ।
नभसस्त्रिभागगामी रौद्र इति कपालतुल्यफलः ॥३१॥
अपरस्यां चलकेतुः शिखया याम्याग्रयांगुलौच्छ्रितया ।
गच्छेद् यथा यथोदक् तथा तथा दैर्घ्यमायाति ॥३२॥
सप्तमुनीन् संस्पृश्य ध्रुवमभिजितमेव च प्रतिनिवृत्तः ।

नभसोऽर्धमात्रमित्वा याम्येनास्तम् समुपयाति ॥ ३३॥
हन्यात् प्रयागकूलाद् यावदवन्तीं च पुष्करारण्यं (पुष्कराण्यं) ।
उदग् अपि च देविकामपि भूयिष्ठं मध्यदेशाख्यम् ॥ ३४॥
अन्यान् अपि स देशान् क्वचित् क्वचिद् धन्ति रोगदुर्भिक्षैः ।
दश मासान् फलपाकोऽस्य कैश्चिदष्टादश प्रोक्तः ॥ ३५॥
प्रागर्धरात्रदृश्यो याम्याग्रः श्वेतकेतुः अन्यश्च ।
क इति युगाकृतिः अपरे युगपत्तौ सप्तदिनदृश्यौ ॥ ३६॥
स्निग्धौ सुभिक्षशिवदावथाधिकं दृश्यते कनामा यः ।
दश वर्षाणि उपतापं जनयति शस्त्रप्रकोपकृतम् ॥ ३७॥
श्वेत इति जटाकारो रूक्षः श्यावो वियत्त्रिभागगतः ।
विनिवर्ततेऽपसव्यं त्रिभागशेषाः प्रजाः कुरुते ॥ ३८॥
आधूम्रया तु शिखया दर्शनमायाति कृत्तिकासंस्थः ।
ज्ञेयः स रश्मिकेतुः श्वेतसमानं फलं धत्ते ॥ ३९॥
ध्रुवकेतुः अनियतगतिप्रमाणवर्णाकृतिः भवति विष्वक् ।
दिव्यान्तरिक्षभौमो भवत्ययं स्निग्ध इष्टफलः ॥ ४०॥
सेनांगेषु नृपाणां गृहतरुशैलेषु चापि देशानाम् ।
गृहिणामुपस्करेषु च विनाशिनां दर्शनं याति ॥ ४१॥
कुमुद इति कुमुदकान्तिः वारुण्यां प्राक्शिखो निशामेकाम् ।
दृष्टः सुभिक्षमतुलं दश किल वर्षाणि स करोति ॥ ४२॥
सकृदेकयामदृश्यः सुसूक्ष्मतारोऽपरेण मणिकेतुः ।
ऋज्वी शिखास्य शुक्ला स्तनोद्गता क्षीरधारेव ॥ ४३॥
उदयन्न् एव सुभिक्षं चतुरो मासान् करोत्यसौ सार्धान् ।
प्रादुर्भावं प्रायः करोति च क्षुद्रजन्तूनाम् ॥ ४४॥
जलकेतुः अपि च पश्चात् स्निग्धः शिखयापरेण चौन्नतया ।
नव मासान् स सुभिक्षं करोति शान्तिं च लोकस्य ॥ ४५॥
भवकेतुः एकरात्रं दृश्यः प्राक् सूक्ष्मतारकः स्निग्धः ।
हरिलांगुलौपमया प्रदक्षिणावर्तया शिखया ॥ ४६॥
यावत एव मुहूर्तान् दर्शनमायाति निर्दिशेत्मासान् ।
तावदतुलं सुभिक्षं रूक्षे प्राणान्तिकान् रोगान् ॥ ४७॥
अपरेण पद्मकेतुः मृणालगौरो भवेन् निशामेकाम् ।
सप्त करोति सुभिक्षं वर्षाणि अतिहर्षयुक्तानि ॥ ४८॥
आवर्त इति निशार्धे सव्यशिखोऽरुणनिभोऽपरे स्निग्धः ।
यावत् क्षणान् स दृश्यः तावन् मासान् सुभिक्षकरः ॥ ४९॥
पश्चात् सन्ध्याकाले संवर्तो नाम धूम्रताम्रशिखः ।
आक्रम्य वियत्त्र्यंशं शूलाग्रावस्थितो रौद्रः ॥ ५०॥
यावत एव मुहूर्तान् दृश्यो वर्षाणि हन्ति तावन्ति ।
भूपान् शस्त्रनिपातैरुदयर्क्षं चापि पीडयति ॥ ५१॥
ये शस्ताः तान् हित्वा केतुभिः आधूपिते (आधूमिते) ऽथवा स्पृष्टे ।
नक्षत्रे भवति वधो येषां राज्ञां प्रवक्ष्ये तान् ॥ ५२॥
अश्विन्यामश्मकपं भरणीषु किरातपार्थिवं हन्यात् ।
बहुलासु कलिंगेशं रोहिण्यां शूरसेनपतिम् ॥ ५३॥
औशीनरमपि सौम्ये जलजाजीवाधिपं तथार्द्रासु ।
आदित्येऽश्मकनाथान् (नाथं) पुष्ये मघधाधिपं हन्ति ॥ ५४॥
असिकेशं भौजंगे पित्र्ये अंगं पाण्ड्यनाथमपि भाग्ये ।
औज्जयिनिक (औज्जयनिक) मार्यम्णे सावित्रे दण्डकाधिपतिम् ॥ ५५॥
चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत् तज्ञः ।
काश्मीरककांबोजौ नृपती प्राभञ्जने न स्तः ॥ ५६॥
इक्ष्वाकुरलकनाथः ( नाथौ, नाथो) च हन्यते यदि भवेद् विशाखासु ।
मैत्रे पुण्ड्राधिपतिः ज्येष्ठासु च (ज्येष्ठास्वथ) सार्वभौमवधः ॥ ५७॥
मूलेऽन्ध्रमद्रकपती जलदेवे काशिपो मरणमेति ।
यौधेयकार्जुनायनशिविचैद्यान् वैश्वदेवे च ॥ ५८॥
हन्यात् कैकयनाथं पांचनदं सिंहलाधिपं वांगम् ।
नैमिषनृपं किरातं श्रवणादिषु षट्स्विमान् क्रमशः ॥ ५९॥
उल्काभिताडितशिखः शिखी शिवः शिवतरोऽतिदृष्तो (अभिवृष्टो) यः ।
अशुभः स एव चोलावगाणसितहूणचीनानाम् ॥ ६०॥
नम्रा यतः शिखिशिखाभिसृता यतो वा
ऋक्षं च यत् स्पृशति तत् कथितांश्च देशान् ।
दिव्यप्रभावनिहतान् स यथा गरुत्मान
भुंक्ते गतो नरपतिः परभोगिभोगान् ॥ ६१॥

---

अध्याय १२ अगस्त्यचाराध्यायः
समुद्रोऽन्तः शैलैः मकरनखरोत्खातशिखरैः
कृतः तोयोच्छित्त्या सपदि सुतरां येन रुचिरः ।
पतन् मुक्तामिश्रैः प्रवरमणिरत्नांबुनिवहैः
सुरान् प्रत्यादेष्टुं मित (सित) मुकुटरत्नान् इव पुरा ॥ १॥
येन चांबुहरणेऽपि विद्रुमैः भूधरैः समणिरत्नविद्रुमैः ।
निर्गतैः तदुरगैश्च राजितः सागरोऽधिकतरं विराजितः ॥ २॥
प्रस्फुरत्तिमिजलेभजिह्मगः क्षिप्तरत्ननिकरो महोदधिः ।
आपदां पदगतोऽपि यापितो येन पीतसलिलोऽमरश्रियम् ॥ ३॥
प्रचलत्तिमिशुक्तिजशंखचितः सलिलेऽपहृतेऽपि पतिः सरिताम् ।
सतरंगसितोत्पलहंसभृतः सरसः शरदीव विभर्ति रुचिं (रुचं) ॥ ४॥
तिमिसितांबुधरं मणितारकं स्फटिकचन्द्रमनंबुशरद्द्युतिः ।
फणिफणोपलरश्मिशिखिग्रहं कुटिलगेशवियग चकार यः ॥ ५॥
दिनकररथमार्गविच्छित्तयेऽभ्युद्यतं यच्
चलत्शृंगमुद्भ्रान्तविद्याधरांसावसक्तप्रियाव्यग्रदत्तांकदेहावलंबांबरात्यस्र (राभि) उच्छ्रितोद्धूयमानध्वजैः शोभितम् ।
करिकटमदमिश्ररक्तावलेहानुवासानुसारिद्विरेफावलीनोत्तमांगैः
कृतान् बाणपुष्पैः इवोत्तंसकान् धारयद्भिः मृगेन्द्रैः
सनाथीकृतान्तर्दरीनिर्झरम् ।

गगनतलमिवोल्लिखन्तं प्रवृद्धैः
गजाकृष्टफुल्लद्रुमत्रासविभ्रान्तमत्तद्विरेफावलीहृष्ट (गीत) मन्द्रस्वनैः
शैलकूटैः तरक्षर्क्षशार्दूलशाखामृगाध्यासितैः ।
रहसि मदनसक्तया रेवया कान्तयेवोपगूढं सुराध्यासितोद्यानम्
अंभोऽशनानन्नमूलानिलाहारविप्रान्वितं विन्ध्यमस्तंभयद् यश्च
तस्योदयः श्रूयताम् ॥ ६ ॥
उदये च मुनेः अगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि ।
हृदयानि सतामिव स्वभावात् पुनः अंबूनि भवन्ति निर्मलानि ॥ ७ ॥
पार्श्वद्वयाधिष्ठितचक्रवाकामापुष्णती सस्वनहंसपंक्तिम् ।
तांबूलरक्तोत्कषिताग्रदन्ती विभाति योषा इव शरत् (सरित्) सहासा ॥ ८ ॥
इन्दीवरासन्नसितोत्पलान्विता शरद् (सरित्) भ्रमत्षट्पदपंक्तिभूषिता ।
सभ्रूलताक्षेपकटाक्षवीक्षणा विदग्धयोषा इव विभाति सस्मरा ॥ ९ ॥
इन्दोः पयोदविगमोपहितां विभूतिं
द्रष्टुं तरंगवलया कुमुदं निशासु ।
उन्मीलयत्यलिनिलीनदलं सुपक्ष्म
वापी विलोचनमिवासिततारकान्तम् ॥ १० ॥
नानाविचित्रांबुजहंसकोककारण्डवापूर्णतडागहस्ता ।
रत्नैः प्रभूतैः कुसुमैः फलैश्च भूर्यच्छतीवार्घमगस्त्यनाम्ने ॥ ११ ॥
सलिलममरपाज्ञया उज्झितं यद् धनपरिवेष्टितमूर्तिभिः भुजंगैः ।
फणिजनितविषाग्निसंप्रदुष्टं भवति शिवं तदगस्त्यदर्शनेन ॥ १२ ॥
स्मरणादपि पापमपाकुरुते किमुत स्तुतिभिः वरुणांगरुहः ।
मुनिभिः कथितोऽस्य यथार्घविधिः कथयामि तथैव नरेन्द्रहितम् ॥ १३ ॥
संख्याविधानात् प्रतिदेशमस्य विज्ञाय सन्दर्शनमादिशेज्ञः ।
तगौज्जयिन्यां (उज्जयन्यां) अगतस्य कन्यां भागैः स्वराख्यैः स्फुटभास्करस्य ॥ १४ ॥
ईषत्प्रभिन्नेऽरुणरश्मिजालैः नैशेऽन्धकारे दिशि दक्षिणस्याम् ।
सांवत्सरावेदितदिग्विभागे भूपोऽर्घमुर्व्यां प्रयतः प्रयच्छेत् ॥ १५ ॥
कालोद्भवैः सुरभिभिः कुसुमैः फलैश्च
रत्नैश्च सागरभवैः कनकांबरैश्च ।
धेन्वा वृषेण परमान्नयुतैश्च भक्ष्यैः
दध्यक्षतैः सुरभिधूपविलेपनैश्च ॥ १६ ॥
नरपतिः इममर्घं श्रद्दधानो दधानः
प्रविगतगददोषो निर्जितारातिपक्षः ।
भवति यदि च दद्यात् सप्त वर्षाणि सम्यग्
जलनिधिरशनायाः (रसनायाः) स्वामितां याति भूमेः ॥ १७ ॥
द्विजो यथालाभमुपाहृतार्घः प्राप्नोति वेदान् प्रमदाश्च पुत्रान् ।
वैश्यश्च गां भूरि धनं च शूद्रो रोगक्षयं धर्मफलं च सर्वे ॥ १८ ॥
रोगान् करोति परुषः कपिलः त्ववृष्टिं
धूम्रो गवामशुभकृत् स्फुरणो भयाय
माञ्जिष्ठरागसदृशः क्षुधमाहवांश्च
कुर्यादणुश्च पुररोधमगस्त्यनामा ॥ १९ ॥
शातकुंभसदृशः स्फटिकाभः तर्पयन्न् इव महीं किरणाग्रैः (किरणौघैः) ।
दृश्यते यदि तदा (ततः) प्रचुरान्ना भूः
भवत्यभयरोगजनाढ्या ॥ २० ॥
उल्कया विनिहतः शिखिना वा क्षुद्भयं मरकमेव विधत्ते (धत्ते) ।
दृश्यते स किल हस्तगतेऽर्के रोहिणीमुपगतेऽस्तमुपैति ॥ २१ ॥

---

अध्याय १३ सप्तर्षिचाराध्यायः
सैकावलीव राजति ससितोत्पलमालिनी सहासेव ।
नाथवतीव च दिग् यैः कौवेरी सप्तभिः मुनिभिः ॥ १ ॥
ध्रुवनायकोपदेशान् नरिनर्ती (नर्त्ती) वोत्तरा भ्रमद्भिश्च ।
यैश्चारमहं तेषां कथयिष्ये वृद्धगर्गमतात् ॥ २ ॥
आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।
षड्द्विकपंचद्वियुतः शककालः तस्य राज्ञश्च ॥ ३ ॥
एकैकस्मिन्न् ऋक्षे शतं शतं ते चरन्ति वर्षाणाम् ।
प्रागुदयतोऽपि अविवराद् र्जून् नयति तत्र संयुक्ताः (प्रागुत्तरतश्च एते सदा उदयन्ते ससाध्वीकाः) ॥ ४ ॥
पूर्वे भागे भगवान् मरीचिः अपरे स्थितो वसिष्ठोऽस्मात् ।
तस्यांगिराः ततोऽत्रिः तस्यासन्नः पुलस्त्यश्च ॥ ५ ॥
पुलहः क्रतुः इति भगान् आसन्ना अनुक्रमेण पूर्वाद्यात् (पूर्वाद्याः) ।
तत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी ॥ ६ ॥
उल्काशनिधूमाद्यैः हता विवर्णा विरश्मयो ह्रस्वाः ।
हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै ॥ ७ ॥
गन्धर्वदेवदानवमन्त्रौषधिसिद्धयक्षनागानाम् ।
पीडाकारो मरीचिः ज्ञेयो विद्याधराणां च ॥ ८ ॥
शकयवनदरदपारतकांबोजां तापसान् वनोपेतान् ।
हन्ति वसिष्ठोऽभिहतो विवृद्धिदो रश्मिसंपन्नः ॥ ९ ॥
अंगिरसो ज्ञानयुता धीमन्तो ब्राह्मणाश्च निर्दिष्टाः ।
अत्रेः कान्तारभवा जलजानि अंभोनिधिः सरितः ॥ १० ॥
रक्षःपिशाचदानवदैत्यभुजंगाः स्मृताः पुलस्त्यस्य ।
पुलहस्य तु मूलफलं क्रतोः तु यज्ञाः सयज्ञभृतः ॥ ११ ॥

---

अध्याय १४ नक्षत्रकूर्माध्यायः

नक्षत्रत्रयवर्गैः आग्नेयाद्यैः व्यवस्थितैः नवधा ।
भारतवर्षे मध्य (मध्यात्) प्रागादिविभाजिता देशाः ॥ १॥
भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसंख्याताः ।
मरुवत्सघोषयामुनसारस्वतमत्स्यमाध्यमिकाः ॥ २॥
माथुरकोपज्योतिषधर्मारण्यानि शूरसेनाश्च ।
गौरग्रीवोद्देहिकपाण्डुगुडाश्वत्थपांचालाः ॥ ३॥
साकेतकंककुरुकालकोटिकुकुराश्च पारियात्रनगः ।
औदुंबरकापिष्टलगजाह्वयाश्चेति मध्यमिदम् ॥ ४॥
अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः ।
व्याघ्रमुखसुह्मकर्वटचान्द्रपुराः शूर्पकर्णाश्च ॥ ५॥
खसमगधशिबिरगिरिमिथिलसमतटोड्राश्ववदनदन्तुरकाः ।
प्राग्ज्योतिषलौहित्यक्षीरोदसमुद्रपुरुषादाः ॥ ६॥
उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलांबष्ठाः ।
एकपदताम्रलिप्त (तामलिपित) ककोशलका वर्धमानाश्च ॥ ७॥
आग्नेय्यां दिशि कोशलकलिंगवंगोपवंगजठरांगाः ।
शौलिकविदर्भवत्सान्ध्रचेदिकाश्च ऊर्ध्वकण्ठाश्च ॥ ८॥
वृषनालिकेरचर्मद्वीपा विन्ध्यान्तवासिनः त्रिपुरी ।
श्मश्रुधरहेमकुड्य (कूत्य) व्यालग्रीवा महाग्रीवाः ॥ ९॥
किष्किन्धकण्टकस्थलनिषादराष्ट्राणि पुरिकदाशार्णाः ।
सह नग्नपर्णशबरैः आश्लेषाद्ये त्रिके देशाः ॥ १०॥
अथ दक्षिणेन लंकाकालाजिनसौरिकीर्णतालिकटाः ।
गिरिनगरमलयदर्दुरमहेन्द्रमालिन्द्यभरुकच्छाः ॥ ११॥
कंकटकंकण (टंकण) वनवासिशिबिकफणिकारकोंकणाभीराः ।
आकरवेणावर्तक (वन्तक) दशपुरगोनर्दकेरलकाः ॥ १२॥
कर्णाटमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः ।
क्रौंचद्वीपजटाधरकावेर्यो रिष्यमूकश्च ॥ १३॥
वैदूर्यशंखमुक्तात्रिवारिचरधर्मपट्टनद्वीपाः ।
गणराज्यकृष्णवेल्लूरपिशिकशूर्पाद्रिकुसुमनगाः ॥ १४॥
तुंबवनकार्मणय (मणेय) कयाम्योदधितापसाश्रमा ऋषिकाः ।
कांचीमरुचीपट्टनचेर्यार्यकसिंहला ऋषभाः ॥ १५॥
बलदेवपट्टनं दण्डकावनतिमिंगिलाशना भद्राः ।
कच्छोऽथ कुन्जरदरी सताम्रपर्णीति विज्ञेयाः ॥ १६॥
नैरृत्यां दिशि देशाः पह्लवकांबोजसिन्धुसौवीराः ।
वडवामुखारवांबष्ठकपिलनारीमुखानर्ताः ॥ १७॥
फेणगिरियवनमार्गर (माकर) कर्णप्रावेयपारशवशूद्राः ।
बर्बरकिरातखण्डक्रव्यादा (क्रव्याश्या) भीरचंचूकाः ॥ १८॥
हेमगिरिसिन्धुकालकरैवतकसुराष्ट्रबादरद्रविडाः ।
स्वात्याद्ये भत्रितये ज्ञेयश्च महार्णवोऽत्रैव ॥ १९॥
अपरस्यां मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः ।
अपरान्तकशान्तिकहैहयप्रशस्ताद्रिवोक्काणाः ॥ २०॥
पंचनदरमठपारततारक्षितिजृंगवैश्यकनकशकाः ।
निर्मर्यादा म्लेच्छा ये पश्चिमदिक्स्थिताः ते च ॥ २१॥
दिशि पश्चिमोत्तरस्यां माण्डव्यतुषार (तुखार) तालहलमद्राः ।
अश्मककुलूतहलडाः (हडः) स्त्रीराज्यनृसिंहवनखस्थाः ॥ २२॥
वेणुमती फल्गुलुका गुलुहा मरुकुच्चचर्मरंगाख्याः ।
एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च ॥ २३॥
उत्तरतः कैलासो हिमवान् वसुमान् गिरिः धनुष्मांश्च ।
क्रौंचो मेरुः कुरवः तथोत्तराः क्षुद्रमीनाश्च ॥ २४॥
कैकयवसातियामुनभोगप्रस्थार्जुनायनाग्नीध्राः ।
आदर्शान्तः (आदर्शान्त) द्वीपित्रिगर्ततुरग आननाः श्वमुखाः (आननाश्वमुखाः) ॥ २५॥
केशधरचिपिटनासिकदासेरकवाटधानशरधानाः ।
तक्षशिलपुष्कलावतकैलावतकण्ठधानाश्च ॥ २६॥
अंबरमद्रकमालवपौरवकच्छारदण्डपिंगलकाः ।
माणहलहूणकोहलशीतकमाण्डव्यभूतपुराः ॥ २७॥
गान्धारयशोवतिहेमतालराजन्यखचरगव्याश्च ।
यौधेयदासमेयाः श्यामाकाः क्षेमधूर्ताश्च ॥ २८॥
ऐशान्यां मेरुकनष्टराज्यपशुपालकीरकाश्मीराः ।
अभिसारदरदतंगणकुलूतसैरिन्ध्र (इन्ध) वनराष्ट्राः ॥ २९॥
ब्रह्मपुरदार्वडामरवनराज्यकिरातचीनकौणिन्दाः ।
भल्लाः पटोल (भल्लापलोल) जटासुरकुनटखस (कुनठखष) घोषकुचिकाख्याः ॥ ३०॥
एकचरणानुविद्धाः (अनुविश्वाः) सुवर्णभूर्वसुधनं (वनं) दिविष्ठाश्च ।
पौरवचीरनिवासि (निवासन) त्रिनेत्रमुञ्जाद्रिगान्धर्वाः (गन्धर्वाः) ॥ ३१॥
वर्गैः आग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः ।
पांचालो मागधिकः कालिंगश्च क्षयं यान्ति ॥ ३२॥
आवन्तोऽथानर्तो मृत्युं चायाति सिन्धुसौवीरः ।
राजा च हारहौरो मद्रेशोऽन्यश्च कौणिन्दः ॥ ३३॥

---

अध्याय १५ नक्षत्रव्यूहाध्यायः
आग्नेये सितकुसुमाहिताग्निमन्त्रज्ञसूत्रभाष्यज्ञाः ।
आकरिकनापितद्विजघटकारपुरोहिताब्दज्ञाः ॥ १॥
रोहिण्यां सुव्रतपण्यभूपधनियोगयुक्तशाकटिकाः ।
गोवृषजलचरकर्षकशिलोच्चयैश्वर्यसंपन्नाः ॥ २॥
मृगशिरसि सुरभिवस्त्राब्जकुसुमफलरत्नवनचरविहंगाः ।
मृगसोमपीथिगान्धर्वकामुका लेखहाराश्च ॥ ३॥
रौद्रे वधबन्धानृतपरदारस्तेयशाठ्यभेदरताः ।
तुषधान्यतीक्ष्णमन्त्राभिचारवेतालकर्मज्ञाः ॥ ४॥
आदित्ये सत्यौदार्यशौचकुलरूपधीयशोऽर्थयुताः ।
उत्तमधान्यं वणिजः सेवाभिरताः सशिल्पिजनाः ॥ ५॥
पुष्ये यवगोधूमाः शालीक्षुवनानि मन्त्रिणो भूपाः ।
सलिलोपजीविनः साधवश्च यज्ञेष्टिसक्ताश्च ॥ ६॥
अहिदेवे कृत्रिमकन्दमूलफलकीटपन्नगविषाणि ।
परधनहरणाभिरताः तुषधान्यं सर्वभिषजश्च ॥ ७॥
पित्र्ये धनधान्याढ्याः कोष्ठागाराणि पर्वताश्रयिणः ।

पितृभक्तवणिक्षूराः क्रव्यादाः स्त्रीद्विषो मनुजाः ॥ ८॥
प्राक्फल्गुनीषु नटयुवतिसुभगगान्धर्वशिल्पिपण्यानि ।
कर्पासलवणमक्षिक (माक्षिक) तैलानि कुमारकाश्चापि ॥ ९॥
आर्यम्णे मार्दवशौचविनयपाखण्डि (पाषण्डि) दानशास्त्ररताः ।
शोभनधान्यमहाधनकर्मानुरताः समनुजेन्द्राः ॥ १०॥
हस्ते तस्करकुञ्जररथिकमहामात्रशिल्पिपण्यानि ।
तुषधान्यं श्रुतयुक्ता वणिजः तेजोयुताश्चात्र ॥ ११॥
त्वाष्ट्रे भूषणमणिरागलेख्यगान्धर्वगन्धयुक्तिज्ञाः ।
गणितपटुतन्तुवायाः शालाक्या राजधान्यानि ॥ १२॥
स्वातौ खगमृगतुरगा वणिजो धान्यानि वातबहुलानि ।
अस्थिरसौहृदलघुसत्त्वतापसाः पण्यकुशलाश्च ॥ १३॥
इन्द्राग्निदैवते रक्तपुष्पफलशाखिनः सतिलमुद्गाः ।
कर्पासमाषचणकाः पुरन्दरहुताशभक्ताश्च ॥ १४॥
मैत्रे शौर्यसमेता गणनायकसाधुगोष्ठियानरताः ।
ये साधवश्च लोके सर्वं च शरत्समुत्पन्नम् ॥ १५॥
पौरन्दरेऽतिशूराः कुलवित्तयशोऽन्विताः परस्वहृतः ।
विजिगीषवो नरेन्द्राः सेनानां चापि नेतारः ॥ १६॥
मूले भेषजभिषजो गणमुख्याः कुसुममूलफलवार्ताः (वार्त्ताः) ।
बीजानि अतिधनयुक्ताः फलमूलैः ये च वर्तन्ते ॥ १७॥
आप्ये मृदवो जलमार्गगामिनः सत्यशौचधनयुक्ताः ।
सेतुकरवारिजीवकफलकुसुमानि अंबुजातानि ॥ १८॥
विश्वेश्वरे महामात्रमल्लकरितुरगदेवतासक्ताः (भक्ताः) ।
स्थावरयोधा भोगान्विताश्च ये तेजसा (चौजसा) युक्ताः ॥ १९॥
श्रवणे मायापटवो नित्योद्युक्ताश्च कर्मसु समर्थाः ।
उत्साहिनः सधर्मा भागवताः सत्यवचनाश्च ॥ २०॥
वसुभे मानोन्मुक्ताः क्लीबा (क्लीबाः) चलसौहृदाः स्त्रियां द्वेष्याः (द्वष्याः, द्वेष्याः) ।
दानाभिरता बहुवित्तसंयुताः शमपराश्च नराः ॥ २१॥
वरुणेशे पाशिकमत्स्यबन्धजलजानि जलचराजीवाः ।
सौकरिकरजकशौण्डिकशाकुनिकाश्चापि वर्गेऽस्मिन् ॥ २२॥
आजे तस्करपशुपालहिंस्रकीनाशनीचशठचेष्टाः ।
धर्मव्रतैः विरहिता नियुद्धकुशलाश्च ये मनुजाः ॥ २३॥
आहिर्बुध्न्ये (आहिर्बुध्न्यु) विप्राः क्रतुदानतपोयुता महाविभवाः ।
आश्रमिणः पाखण्डा (पाषण्डा) नरेश्वराः सारधान्यं च ॥ २४॥
पौष्णे सलिलजफलकुसुमलवणमणिशंखमौक्तिकाब्जानि ।
सुरभिकुसुमानि गन्धा वणिजो नौकर्णधाराश्च ॥ २५॥
अश्विन्यामश्वहराः सेनापतिवैद्यसेवकाः तुरगाः ।
तुरगारोहा वणिजो (तुरगारोहाश्च वनिग्) रूपोपेताः तुरगरक्षाः ॥ २६॥
याम्येऽसृक्पिशितभुजः क्रूरा वधबन्धताडनासक्ताः ।
तुषधान्यं नीचकुलोद्भवा विहीनाश्च सत्त्वेन ॥ २७॥
पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि ।
सपौष्णमैत्रं पितृदैवतं च प्रजापतेः भं च कृषीवलानाम् ॥ २८॥
आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रवदन्ति तानि (भानि) ।
मूलत्रिनेत्रानिलवारुणानि भानि उग्रजातेः प्रभविष्णुतायाः (तायां) ॥ २९॥
सौम्येन्द्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि ।
सार्पं विशाखा श्रवणो भरण्यश्चण्डालजातेः अभिनिर्दिशन्ति (इति निर्दशन्ति) ॥ ३०॥
रविरविसुतभोगमागतं क्षितिसुतभेदनवक्रदूषितम् ।
ग्रहणगतमथोल्कया हतं नियतमुषाकरपीडितं च यत् ॥ ३१॥
तदुपहतमिति प्रचक्षते प्रकृतिविपर्यययातमेव वा ।
निगदितपरिवर्गदूषणं कथितविपर्ययगं समृद्धये ॥ ३२॥

---

अध्याय १६ ग्रहभक्तियोगाध्यायः

प्रान् नर्मदार्धशोणौड्रवंगसुह्माः कलिंगबाह्लीकाः ।
शकयवनमाधशबरप्राग्ज्योतिषचीनकांबोजाः ॥ १॥
मेकलकिरातविटका बहिरन्तःशैलजाः पुलिन्दाश्च ।
द्रविडानां प्रागर्धं दक्षिणकूलं च यमुनायाः ॥ २॥
चंपौदुंबरकौशांबिचेदिविन्ध्याटवीकलिंगाश्च ।
पुण्ड्रा गोलांगूलश्रीपर्वतवर्धमानानि (मानाश्च) ॥ ३॥
इक्षुमतीत्यथ तस्करपारतकान्तारगोबीजानाम् ।
तुषधान्यकटुकतरुकनकदहनविषसमरशूराणाम् ॥ ४॥
भेषजभिषक्चतुष्पदकृषिकरनृपहिंस्रयायिचौराणाम् ।
व्यालारण्ययशोयुततीक्ष्णाणां भास्करः स्वामी ॥ ५॥
गिरिसलिलदुर्गकोशलभरुकच्छसमुद्ररोमकतुषाराः (खाराः) ।
वनवासितंगणहलस्त्रीराज्यमहार्णवद्वीपाः ॥ ६॥
मधुररसकुसुमफलसलिललवणमणिशंखमौक्तिकाब्जानाम् ।
शालियवौषधिगोधूमसोमपाक्रन्दविप्राणाम् ॥ ७॥
सितसुभगतुरगरतिकरयुवतिचमूनाथभोज्यवस्त्राणाम् ।
शृंगिनिशाचरकार्षकयज्ञविदां चाधिपश्चन्द्रः ॥ ८॥
शोणस्य नर्मदाया भीमरथायाश्च पश्चिमार्धस्थाः ।
निर्विन्ध्या वेत्रवती सिप्रा गोदावरी वेणा ॥ ९॥
मन्दाकिनी पयोष्णी महानदी सिन्धुमालतीपाराः ।
उत्तरपाण्ड्यमहेन्द्राद्रिविन्ध्यमलयोपगाश्चोलाः ॥ १०॥
द्रविडविदेहान्ध्राश्मकभासापर (पुर) कौंकणाः समन्त्रिषिकाः ।
कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसंकरिणः (संकरजाः) ॥ ११॥
( नासिक्यभोगवर्धनविराटविन्ध्याद्रिपार्श्वगा देशाः ।
ये च पिबन्ति सुतोयां तापीं ये च अपि गोमतीसलिलम् ॥)
नागरकृषिकरपारतहुताशनाजीविशस्त्रवार्तानां (वार्त्तानां) ।
आटविकदुर्गकर्वटवधिक (वधक) नृशंसावलिप्तानाम् ॥ १२॥
नरपतिकुमारकुञ्जरदांभिकडिंभाभिघातपशुपानाम् ।
रक्तफलकुसुमविद्रुमचमूपगुडमद्यतीक्ष्णानाम् ॥ १३॥

कोशभवनाग्निहोत्रिकधात्वाकरशाक्यभिक्षुचौराणाम् ।
शठदीर्घवैरबह्वाशिनां च वसुधासुतोऽधिपतिः ॥ १४ ॥
लोहित्यः सिन्धुनदः सरयूर्गांभीरिका रथाख्या च ।
गंगाकौशिक्याद्याः सरितो वैदेहकांबोजाः ॥ १५ ॥
मथुरायाः पूर्वार्धं हिमवद्गोमन्तचित्रकूटस्थाः ।
सौराष्ट्रसेतुजलमार्गपण्यबिलपर्वताश्रयिणः ॥ १६ ॥
उदपानयन्त्रगान्धर्वलेख्यमणिरागगन्धयुक्तिविदः ।
आलेख्यशब्दगणितप्रसाधकायुष्यशिल्पज्ञाः ॥ १७ ॥
चरपुरुषकुहकजीवकशिशुकविशठसूचकाभिचाररताः ।
दूतनपुंसकहास्यज्ञभूततन्त्रेन्द्रजाजज्ञाः ॥ १८ ॥
आरक्षकनटनर्तकघृततैलस्नेहबीजतिक्तानि ।
व्रतचारिरसायनकुशलवेसराश्चन्द्रपुत्रस्य ॥ १९ ॥
सिन्धुनदपूर्वभागो मथुरापश्चार्धभरतसौवीराः ।
स्रुघ्नौदीच्य (नोदीच्य) विपाशासरित्शतद्रू रमठशाल्वाः
(साल्वाः) ॥ २० ॥
त्रैगर्तपौरवांब (बांब) ष्ठपारता वाटधानयौधेयाः ।
सारस्वतार्जुनायनमत्स्यार्धग्रामराष्ट्राणि ॥ २१ ॥
हस्त्यश्वपुरोहितभूपमन्त्रिमांगल्यपौष्टिकासक्ताः ।
कारुण्यसत्यशौचव्रतविद्यादानधर्मयुताः ॥ २२ ॥
पौरमहाधनशब्दार्थवेदविदुषोऽभिचारनीतिज्ञाः ।
मनुजेश्वरोपकरणम् छत्रध्वजचामराद्यं च ॥ २३ ॥
शैलेयकु (क) ष्ठमांसीतगरसरसेन्धवानि वल्लीजम् ।
मधुररसमधूच्छिष्टानि चोरकश्चेति जीवस्य ॥ २४ ॥
तक्षशिलमर्तिकावत (मार्तिकावत)
बहुगिरिगान्धारपुष्कलावतकाः ।
प्रस्थलमालवकैकयदाशार्णौशीनराः शिबयः ॥ २५ ॥
ये च पिबन्ति वितस्तामिरावतीं चन्द्रभागसरितं च ।
रथरजताकरकुञ्जरतुरगमहामात्रधनयुक्ताः ॥ २६ ॥
सुरभिकुसुमानुलेपनमणिवज्रविभूषणांबुरुहशय्याः ।
वरतरुणयुवतिकामोपकरणमृष्टान्नमधुरभुजः ॥ २७ ॥
उद्यानसलिलकामुकयशःसुखौदार्यरूपसंपन्नाः ।
विद्वदमात्यवणिग्जनघटकृच्चित्राण्डजाः त्रिफलाः ॥ २८ ॥
कौशेयपट्टकंबलपत्रौर्णिकरोध्रपत्रचोचानि ।
जातीफलागुरुवचापिप्पल्यश्चन्दनं च भृगोः ॥ २९ ॥
आनर्तार्बुदपुष्करसौराष्ट्राभीरशूद्ररैवतकाः ।
नष्टा यस्मिन् देशे सरस्वती पश्चिमो देशः ।
कुरुभूमिजाः प्रभासं विदिशा वेदस्मृती महीतटजाः ।
खलमलिननीचतैलिकविहीनसत्त्वौपहतपुंस्त्वाः ॥ ३० ॥
बान्धन (बन्धन) शाकुनिकाशुचिकैवर्तविरूपवृद्धसौकरिकाः ।
गणपूज्यस्खलितव्रतशबरपुलिन्दार्थपरिहीनाः ।
कटुतिक्तरसायनविधवयोषितो भुजगतस्करमहिष्यः ।
खरकरभचणकवातल (वातुल) निष्पावाश्चार्कपुत्रस्य ॥ ३१ ॥
गिरिशिखरकन्दरदरीविनिविष्टा म्लेच्छजातयः शूद्राः ।
गोमायुभक्षशूलिकवोक्काणाश्वमुखविकलांगाः ।
कुलपांसनहिंस्रकृतघ्नचौरनिःसत्यशौचदानाश्च ।
खरचरनियुद्धवित्तीव्ररोषगर्त्ताश्रया (भाशया) नीचाः ॥ ३२ ॥
उपहतदांभिकराक्षसनिद्राबहुलाश्च जन्तवः सर्वे ।
धर्मेण च संत्यक्ता माषतिलाश्चार्कशशिशत्रोः ॥ ३३ ॥
गिरिदुर्गपह्लवश्वेतहूणचोलावगाणमरुचीनाः ।
प्रत्यन्तधनिमहेच्छव्यवसायपराक्रमोपेताः ॥ ३४ ॥
परदारविवादरताः पररन्ध्रकुतूहला मदोत्सिक्ताः ।
मूर्खाधार्मिकविजिगीषवश्च केतोः समाख्याताः ॥ ३५ ॥
उदयसमये यः स्निग्धांशुः महान् प्रकृतिस्थितो
यदि च न हतो निर्घातोल्कारजोग्रहमर्दनैः ।
स्वभवनगतः स्वोच्चप्राप्तः शुभग्रहवीक्षितः ।
स भवति शिवः तेषां येषां प्रभुः परिकीर्तितः ॥ ३६ ॥
अभिहितविपरीतलक्षणे (लक्षनैः) क्षयमुपगच्छति
तत्परिग्रहः ।
डमरभयगदातुरा जना नरपतयश्च भवन्ति दुःखिताः ॥ ३७ ॥
यदि न रिपुकृतं भयं नृपाणां स्वसुतकृतं नियमादमात्यजं
वा ।
भवति जनपदस्य चाप्यवृष्ट्या गमनमपूर्वपुराद्रिनिम्नगासु ॥
३८ ॥

---

अध्याय १७ ग्रहयुद्धाध्यायः ।
युद्धं यथा यदा वा भविष्यं (भविष्यद्) आदिश्यते
त्रिकालज्ञैः ।
तद्विज्ञानं करणे मया कृतं सूर्यसिद्धान्ते (सिद्धान्तात्) ॥ १ ॥
वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम् ।
अतिदूराद् दृग्विषये समतामिव संप्रयातानाम् ॥ २ ॥
आसन्नक्रमयोगाद् भेदौल्लेखांशुमर्दनासव्यैः (सव्यः) ।
युद्धं चतुष्प्रकारं पराशराद्यैः मुनिभिरुक्तम् ॥ ३ ॥
भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानां च ।
उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम् ॥ ४ ॥
अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्दाः ।
युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम् ॥ ५ ॥
रविः आक्रन्दो मध्ये पौरः पूर्वेऽपरे स्थितो यायी ।
पौरा बुधगुरुरविजा नित्यं शीतांशुः आक्रन्दः (आक्रन्द्रः)
॥ ६ ॥
केतुकुजराहुशुक्रा यायिन एते हता घ्नन्ति (ग्रहा हन्युः) ।
आक्रन्दयायिपौरान् जयिनो जयदाः (जयदा) स्ववर्गस्य ॥
७ ॥
पौरे पौरेण हते पौराः पौरान् नृपान् विनिघ्नन्ति ।
एवं याय्याक्रन्दा (याय्याक्रन्दौ) नागरयायिग्रहाश्चैव ॥ ८ ॥
दक्षिणदिक्स्थः परुषो वेपथुः अप्राप्य सन्निवृत्तोऽणुः ।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥ ९ ॥
उक्तविपरीतलक्षणसंपन्नो जयगतो विनिर्देश्यः (विनिर्दिष्टः)
।
विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः ॥
१० ॥
द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः ।
तत्र अन्योन्यं प्रीतिः (अन्योन्यप्रीतिः)
विपरीतावात्मपक्षघ्नौ ॥ ११ ॥

युद्धं समागमो वा यद्यव्यक्तौ स्वलक्षणैः (तु लक्षणैः) भवतः ।
भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्देश्यम् ॥ १२ ॥
गुरुणा जितेऽवनिसुते बाह्लीका यायिनोऽग्निवार्ताश्च (अग्निवार्त्ताश्च) ।
शशिजेन शूरसेनाः कलिंगशाल्वाः (साल्वाः) च पीड्यन्ते ॥ १३ ॥
सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति ।
कोष्ठागार (कोष्ठागार) म्लेच्छक्षत्रियतापश्च शुक्रजिते ॥ १४ ॥
भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः ।
उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमायान्ति ॥ १५ ॥
गुरुणा जिते बुधे (बुधे जिते)
म्लेच्छशूद्रचौरार्थयुक्तपौरजनाः ।
त्रैगर्तपार्वतीयाः पीड्यन्ते कंपते च मही ॥ १६ ॥
रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः ।
भृगुणा जितेऽग्निकोपः सस्यांबुदयायिविध्वंसः ॥ १७ ॥
जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः ।
शाल्वा (साल्वा) वत्सा वंगा गावः सस्यानि पीड्यन्ते (नश्यन्ति) ॥ १८ ॥
भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः ।
सौरेण चार्जुनायनवसातियौधेयशिबिविप्राः ॥ १९ ॥
शशितनयेनापि जिते बृहस्पतौ म्लेच्छसत्यशस्त्रभृतः ।
उपयान्ति मध्यदेशश्च संक्षयं यग भक्तिफलम् ॥ २० ॥
शुक्रे बृहस्पतिजिते (हते) यायी श्रेष्ठो विनाशमुपयाति ।
ब्रह्मक्षत्रविरोधः सलिलं च न वासवः त्यजति ॥ २१ ॥
कोशलकलिंगवंगा वत्सा मत्स्याश्च मध्यदेशयुताः ।
महतीं व्रजन्ति पीडां नपुंसकाः शूरसेनाश्च ॥ २२ ॥
कुजविजिते भृगुतनये बलमुख्यवधो नरेन्द्रसंग्रामाः ।
सौम्येन पार्वतीयाः क्षीरविनाशोऽल्पवृष्टिश्च ॥ २३ ॥
रविजेन सिते विजिते गुणमुख्याः (गणमुख्याः) शस्त्रजीविनः क्षत्रम् ।
जलजाश्च निपीड्यन्ते सामान्यं भक्तिफलमन्यत् ॥ २४ ॥
असिते सितेन निहतेऽर्घवृद्धिः अहिविहगमानिनां पीडा ।
क्षितिजेन तंगणान्ध्रौड्रकाशिबाह्लीकदेशानाम् ॥ २५ ॥
सौम्येन पराभूते मन्दे अंगवणिग्विहंगपशुनागाः ।
सन्ताप्यन्ते गुरुणा स्त्रीबहुला महिषकशकाश्च ॥ २६ ॥
अयं विशेषोऽभिहितो हतानां कुजज्ञवागीशसितासितानाम् ।
फलं तु वाच्यं ग्रहभक्तितो ऽन्यद् यथा तथा घ्नन्ति हताः स्वभक्तीः ॥ २७ ॥

---

अध्याय १८ शशिग्रहसमागमाध्यायः
भानां यथासंभवमुत्तरेण यातो ग्रहाणां यदि वा शशांकः ।
प्रदक्षिणं तत्शुभदं नृपाणां (शुभकृन्नराणां) याम्येन यातो न शिवः शशांकः ॥ १ ॥
चन्द्रमा यदि कुजस्य यात्युदक् पार्वतीयबलशालिनां जयः ।
क्षत्रियाः प्रमुदिताः सयायिनो भूरिधान्यमुदिता वसुन्धरा ॥ २ ॥
उत्तरतः स्वसुतस्य शशंकः पौरजयाय सुभिक्षकरश्च ।
सस्यचयं कुरुते जनहार्दिं कोशचयं च नराधिपतीनाम् ॥ ३ ॥
बृहस्पतेरुत्तरगे शशांके पौरद्विजक्षत्रियपण्डितानाम् ।
धर्मस्य देशस्य च मध्यमस्य वृद्धिः सुभिक्षं मुदिताः प्रजाश्च ॥ ४ ॥
भार्गवस्य यदि यात्युदक् शशी कोशयुक्तगजवाजिवृद्धिदः ।
यायिनां च विजयो धनुष्मतां सस्यसंपदपि चोत्तमा तदा ॥ ५ ॥
रविजस्य शशी प्रदक्षिणं कुर्यागेत् पुरभूभृतां जयः ।
शकबाह्लिकसिन्धुपह्लवा मुदभाजो (मुद्भाजो) यवनैः समन्विताः ॥ ६ ॥
येषामुदग्गच्छति भग्रहाणां प्रालेयरश्मिः निरुपद्रवश्च ।
तद्द्रव्यपौरैतरभक्तिदेशान् पुष्णाति याम्येन निहन्ति तानि ॥ ७ ॥
शशिनि फलमुदक्स्थे (उदकस्थे) यद् ग्रहस्यौपदिष्टं
भवति तदपसव्ये सर्वमेव प्रतीपम् ।
इति शशिसमवायाः कीर्तिता (कीर्त्तिता) भग्रहाणां
न खलु भवति युद्धं साकमिन्दोः ग्रहर्क्षैः ॥ ८ ॥

---

अध्याय १९ ग्रहवर्षफलाध्यायः
सर्वत्र भूः विरलसस्ययुता वनानि
दैवाद् बिभक्षयिषुदंष्ट्रिसमावृतानि ।
नद्यः (स्यन्दन्ति) च नैव हि (च) पयः प्रचुरं स्रवन्ति (स्रवन्त्यो)
रुग्भेषजानि न तथातिबलान्वितानि ॥ १ ॥
तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले
नात्यंबुदा जलमुचोऽचलसन्निकाशाः ।
नष्टप्रभऋक्षगणशीतकरं नभश्च
सीदन्ति तापसकुलानि सगोकुलानि ॥ २ ॥
हस्त्यश्वपत्तिमदसह्यबलैरुपेता
बाणासनासिमुशलातिशयाश्चरन्ति ।
घ्नन्तो नृपा युधि नृपानुचरैश्च देशान
संवत्सरे दिनकरस्य दिनेऽथ मासे ॥ ३ ॥
व्याप्तं नभः प्रचलिताचलसन्निकाशैः
व्यालाञ्जनालिगवलच्छविभिः पयोदैः ।
गां पूरयद्भिः अखिलाममलाभिः अद्भिः
उत्कण्ठितेन (उत्कण्ठकेन) गुरुणा ध्वनितेन चाशाः ॥ ४ ॥
तोयानि पद्मकुमुदौत्पलवन्त्यतीव
फुल्लद्रुमाणि उपवनानि अलिनादितानि ।
गावः प्रभूतपयसो नयनाभिरामा
रामा रतैः अविरतं रमयन्ति रामान् ॥ ५ ॥
गोधूमशालियवधान्यवरैक्षुवाटा
भूः पाल्यते नृपतिभिः नगराकराढ्या ।
चित्यंकिता क्रतुवरेष्टिविघुष्टनादा
संवत्सरे शिशिरगोरभिसंप्रवृत्ते ॥ ६ ॥
वातोद्धतश्चरति वह्निरतिप्रचण्डो
ग्रामान् वनानि नगराणि च सन्दिधक्षुः ।

हाहा इति दस्युगणपातहता रटन्ति
निःस्वीकृता विपशवो भुवि मर्त्यसंघाः ॥ ७॥
अभ्युन्नता वियति संहृतमूर्तयोऽपि
मुंचन्ति कुत्रचिद् (न क्वचिद्) अपः प्रचुरं पयोदाः ।
सीम्नि प्रजातमपि शोषमुपैति सस्यं
निष्पन्नमपि अविनयादपरे हरन्ति ॥ ८॥
भूपा न सम्यगभिपालनसक्तचित्ताः
पित्तोत्थरुक्प्रचुरता भुजगप्रकोपः ।
एवंविधैरुपहृता (उपहृता) भवति प्रजा इयं
संवत्सरेऽवनिसुतस्य विपन्नसस्या ॥ ९॥
माया इन्द्रजालकुहकाकरनागराणां
गान्धर्वलेख्यगणितास्त्रविदां च वृद्धिः ।
पिप्रीषया नृपतयोऽद्भुतदर्शनानि
दित्सन्ति तुष्टिजननानि परस्परेभ्यः ॥ १०॥
वार्ता (वार्त्ता) जगत्यवितथा विकला त्रयी च
सम्यक् चरत्यपि मनोः इव दण्डनीतिः ।
अध्यक्षर (अध्यक्षरं) स्वभिनिविष्टधियोऽपि (अत्र) केचिद्
आन्वीक्षिकीषु च परं पदमीहमानाः ॥ ११॥
हास्यज्ञदूतकविबालनपुंसकानां
युक्तिज्ञसेतुजलपर्वतवासिनां च ।
हार्दिं करोति मृगलांछनजः स्वकेऽब्दे
मासेऽथवा प्रचुरता (प्रचुरतां) भुवि चाउषधीनाम् ॥ १२॥
ध्वनिरुच्चरितोऽध्वरे द्युगामी
विपुलो यज्ञमुषां मनांसि भिन्दन् ।
विचरत्यनिशं द्विजोत्तमानां
हृदयानन्दकरोऽध्वरांशभाजाम् ॥ १३॥
क्षितिरुत्तमसस्यवत्यनेकद्विपपत्त्यश्वधनोरुगोकुलाढ्या ।
क्षितिपैः अभिपालनप्रवृद्धा द्युचरस्पर्धिजना तदा विभाति ॥
१४॥
विविधैः वियदुन्नतैः पयोदैः वृतमुर्वीं पयसाभितर्पयद्भिः ।
सुरराजगुरोः शुभे तु (अत्र) वर्षे बहुसस्या
क्षितिरुत्तमऋद्धियुक्ता ॥ १५॥
शालीक्षुमत्यपि धरा धरणीधराभ
धाराधरौज्झितपयःपरिपूर्णवप्रा ।
श्रीमत्सरोरुहततांबुतडागकीर्णा
योषा इव भात्यभिनवाभरणौज्ज्वलांगी ।
क्षत्रं क्षितौ क्षपितभूरिबलारिपक्षम्
उद्घुष्टनैकजयशब्दविराविताशम् ।
संहृष्टशिष्टजनदुष्टविनष्टवर्गा
गां पालयन्त्यवनिपा नगराकराढ्याम् ॥ १६॥
पेपीयते मधु मधौ सह कामिनीभिः
जेगीयते श्रवणहारि सवेणुवीणम् ।
बोभुज्यतेऽतिथिसुहृत्स्वजनैः सहान्नम्
अब्दे सितस्य मदनस्य जयावघोषह ॥ १७॥
उद्वृत्तदस्युगणभूरिरणाकुलानि
राष्ट्राणि अनेकपशुवित्तविनाकृतानि ।
रोरूयमाणहतबन्धुजनैः जनैश्च
रोगौत्तमाकुलकुलानि बुभुक्षया च ॥ १८॥
वातोद्धतांबुधरवर्जितमन्तरिक्षम्
आरुग्णनैकविटपं च धरातलं द्यौः ।
नष्टार्कचन्द्रकिरणातिरजोऽवनद्धा
तोयाशयाश्च विजलाः सरितोऽपि तन्व्यः ॥ १९॥
जातानि कुत्रचिदतोयतया विनाशम्
ऋच्छन्ति पुष्टिमपराणि जलोक्षितानि ।
सस्यानि मन्दमभिवर्षति वृत्रशत्रुः (शत्रौ)
वर्षे दिवाकरसुतस्य सदा प्रवृत्ते ॥ २०॥
अणुः अपटुमयूखो नीचगोऽन्यैः जितो वा
न सकलफलदाता पुष्टिदोऽतोऽन्यथा यः ।
यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैवं याप्यमन्योन्यतायाम् ॥ २१॥

---

अध्याय २० ग्रहशृंगाटकाध्यायः
यस्यां दिशि दृश्यन्ते विशन्ति ताराग्रहा रविं सर्वे ।
भवति भयं दिशि तस्यामायुधकोपक्षुधातंकैः ॥ १॥
चक्रधनुःशृंगाटकदण्डपुरप्रासवज्रसंस्थानाः ।
क्षुद् (क्षुद) वृष्टिकरा लोके समराय च मानवेन्द्राणाम् ॥ २॥
यस्मिन् खांशे दृश्या ग्रहमाला दिनकरे दिनान्तगते ।
तत्रऽन्यो भवति नृपः परचक्रौपद्रवश्च महान् ॥ ३॥
तस्मिन्न् (यस्मिन्न्) ऋक्षे कुर्युः समागमं तज्जनान् ग्रहा
हन्युः ।
अविभेदिनः (अविभेदनाः) परस्परममलमयूखाः शिवाः
तेषाम् ॥ ४॥
ग्रहसंवर्तसमागमसम्मोहसमाजसन्निपाताख्याः ।
कोशश्चेत्येतेषामभिधास्ये लक्षणं सफलं ॥ ५॥
एकर्क्षे चत्वारः सह पौरैः यायिनोऽथवा पंच ।
संवर्तो नाम भवेत्शिखिराहुयुतः स सम्मोहः ॥ ६॥
पौरः पौरसमेतो यायी सह यायिना समाजाख्यः ।
यमजीवसंगमेऽन्यो यद्यागच्छेत् तदा कोशः ॥ ७॥
उदितः पश्चादेकः प्राक् चान्यो यदि स सन्निपाताख्यः ।
अविकृततनवः स्निग्धा विपुलाश्च समागमे धन्याः ॥ ८॥
समौ तु संवर्तसमागमाख्यौ सम्मोहकोशौ भयदौ प्रजानाम् ।
समाजसंज्ञो सुसमा प्रदिष्टा (समाज्ञः सुसमः प्रदिष्टो)
वैरप्रकोपः खलु सन्निपाते ॥ ९॥

---

अध्याय २१ गर्भलक्षणाध्यायः
अन्नं जगतः प्राणाः प्रावृद्कालस्य चान्नमायत्तम् ।
यस्मादतः परीक्ष्यः प्रावृद्कालः प्रयत्नेन ॥ १॥
तल्लक्षणानि मुनिभिः यानि निबद्धानि तानि दृष्ट्वा इदम् ।
क्रियते गर्गपराशरकाश्यपवज्रादि (वात्स्यादि) रचितानि ॥
२॥
दैवविदविहितचित्तो द्युनिशं यो गर्भलक्षणे भवति ।
तस्य मुनेः इव वाणी न भवति मिथ्यांबुनिर्देशे ॥ ३॥
किं वातः परमन्यत्शास्त्रज्यायो (शास्त्रं ज्यायो) ऽस्ति यद्
विदित्वा एव ।

प्रध्वंसिनि अपि काले त्रिकालदर्शी कलौ भवति ॥ ४॥
केचिद् वदन्ति कार्तिक (कार्त्तिक) शुक्लान्तमतीत्य
गर्भदिवसाः स्युः ।
न च (तु) तन्मतं बहूनां गर्गादीनां मतं वक्ष्ये ॥ ५॥
मार्गशिरःसित (मार्गशिरशुक्ल) पक्षप्रतिपत्प्रभृति
क्षपाकरेऽषाढाम् ।
पूर्वां वा समुपगते गर्भाणां लक्षणम् ज्ञेयम् ॥ ६॥
यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात् ।
पंचनवते दिनशते तत्रैव प्रसवमायाति ॥ ७॥
सितपक्षभवाः कृष्णे शुक्ले कृष्णा द्युसंभवा रात्रौ ।
नक्तंप्रभवाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम् ॥ ८॥
मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च ।
पौषस्य कृष्णपक्षेण निर्दिशेत्श्रावणस्य सितम् ॥ ९॥
माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति ।
माघस्य कृष्णपक्षेण निर्दिशेद् भाद्रपदशुक्लम् ॥ १०॥
फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः ।
तस्यैव कृष्णपक्षोद्भवाः तु ये तेऽश्वयुक्शुक्ले ॥ ११॥
चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः ।
चैत्रासितसंभूताः कार्तिकशुक्ले (कार्त्तिकशुक्ले) ऽभिवर्षन्ति
॥ १२॥
पूर्वोद्भूताः पश्चादपरोत्थाः प्राग् भवन्ति जीमूताः ।
शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च ॥ १३॥
ह्लादिमृदूदक्षिवशक्रदिग्भवो मारुतो वियद्विमलम् ।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयखार्कौ (मयूखार्कौ)
॥ १४॥
पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम् ।
काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम् ॥ १५॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यका (सूर्यकाः) शुभा सन्ध्या
।
शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसंघाः ॥ १६॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः ।
तरवश्च निरुपसृष्टांकुरा नरचतुष्पदा हृष्टाः ॥ १७॥
गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः ।
स्वर्तुस्वभावजनितो गर्भविवृद्ध्यै (विवृद्धौ) तमभिधास्ये ॥
१८॥
पौषे समार्गशीर्षे सन्ध्यारागोऽंबुदाः सपरिवेषाः ।
नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः ॥ १९॥
माघे प्रबलो वायुः तुषारकलुषद्युती रविशशांकौ ।
अतिशीतं सघनस्य च भानोः अस्तोदयौ धन्यौ ॥ २०॥
फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसंप्लवाः स्निग्धाः ।
परिवेषाश्चासकलाः कपिलः ताम्रो रविश्च शुभः ॥ २१॥
पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः ।
घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे ॥ २२॥
मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासः ।
जलचरसत्त्वाकारा ग्रभेषु घनाः प्रभूतजलाः ॥ २३॥
तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः ।
रुषिता इव धाराभिः विसृजन्त्यंभः प्रस्वकाले ॥ २४॥
गर्भौपघातलिंगानि उल्काशनिपांशुपातदिग्दाहः ।
क्षितिकंपखपुरकीलककेतुग्रहयुद्धनिर्घाताः ॥ २५॥
रुधिरादिवृष्टिवैकृतपरिघेन्द्रधनूंषि दर्शनं राहोः ।
इत्युत्पातैः एतैः त्रिविधैश्चान्यैः हतो गर्भः ॥ २६॥
स्वर्तुस्वभावजनितैः सामान्यैः यैश्च लक्षणैः वृद्धिः ।
गर्भाणाम् विपरीतैः तैः एव विपर्ययो भवति ॥ २७॥
भद्रपदाद्वयविश्वांबुदेव (दैव) पैतामहेष्वथ ऋक्षेषु ।
सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति ॥ २८॥
शतभिषगाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः ।
पुष्णाति बहून् दिवसान् हन्त्युत्पातैः हतः त्रिविधैः ॥ २९॥
मृगमासादिष्वष्टौ षट षोडश विंशतिश्चतुर्युक्ता ।
विंशतिः अथ दिवसत्रयमेकतमऋक्षेण पंचभ्यः ॥ ३०॥
पंचनिमित्तैः शतयोजनं तदर्धार्धमेकहान्याऽतः ।
वर्षति पंचनिमित्ताद् (पंचसमन्ताद्) रूपेणैकेन यो गर्भः ॥
३१॥
द्रोणः पंचनिमित्ते गर्भे त्रीणि आढकानि पवनेन ।
षड विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे ॥ ३२॥
क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः ।
शशिनि रवौ वा शुभसंयुतईक्षिते भूरिवृष्टिकराः ॥ ३३॥
ग्रभसमयेऽतिवृष्टिः गर्भाभावाय निर्निमित्तकृता ।
द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भः स्रुतो भवति ॥ ३४॥
गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिः यदि न वृष्टः ।
आत्मीयगर्भसमये करकामिश्रं ददात्यंभः ॥ ३५॥
काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः ।
कालातीतं तद्वत् सलिलं काठिन्यमुपयाति ॥ ३६॥
पवनसलिलविद्युद्गर्जिता अभ्रान्वितो यः
स भवति बहुतोयः पंचरूपाभ्युपेतः ।
विसृजति यदि तोयं गर्भकालेऽतिभूरि
प्रसवसमयमित्वा शीकरांभः करोति ॥ ३७॥

---

अध्याय २२ गर्भधारणाध्यायः
ज्यैष्ठसितेऽष्टम्याद्याश्चत्वारो वायुधारणा दिवसाः ।
मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च ॥ १॥
तत्रैव स्वात्याद्ये वृष्टे भचतुष्टये क्रमात्मासाः ।
श्रावणपूर्वा ज्ञेयाः परिस्रुता धारणाः ताः स्युः ।
यदि ता स्युः एकरूपाः शुभाः ततः सान्तराः तु न शिवाय
।
तस्करभयदाश्चौक्ताः (प्रोक्ताः) श्लोकाश्चाप्यत्र वासिष्ठाः ॥
२॥
सविद्युतः सपृषतः सपांशूत्करमारुताः ।
सार्कचन्द्रपरिच्छन्ना धारणाः शुभधारणाः ॥ ३॥
यदा तु विद्युतः श्रेष्ठाः शुभाशाः (शुभाशा) प्रत्युपस्थिताः ।
तदापि सर्वसस्यानां वृद्धिं ब्रूयाद् विचक्षणः ॥ ४॥
सपांशुवर्षाः सापश्च शुभा बालक्रिया अपि ।
पक्षिणाम् सुस्वरा वाचः क्रीडा पांशुजलादिषु ॥ ५॥
रविचन्द्रपरीवेषाः स्निग्धा नात्यन्तदूषिताः ।

वृष्टिः तदापि विज्ञेया सर्वसस्यार्थसाधिका (अभिवृद्धये) ॥ ६ ॥
मेघाः स्निग्धाः संहताश्च प्रदक्षिणगतिक्रियाः ।
तदा स्यान् महती वृष्टिः सर्वसस्याभिवृद्धये (अर्थसाधिका) ॥ ७ ॥

---

अध्याय २३ प्रवर्षणाध्यायः
ज्यैष्ठ्यां समतीतायां पूर्वाषाढादिसंप्रवृष्टेन ।
शुभमशुभं वा वाच्यं परिमाणं चांभसः तज्ज्ञैः ॥ १ ॥
हस्तविशालं कुण्डकमधिकृत्यांबुप्रमाणनिर्देशः ।
पंचाशत् पलमाढकमनेन मिनुयाज्जलं पतितम् ॥ २ ॥
येन धरित्री मुद्रा जनिता वा बिन्दवः त्र्णाग्रेषु ।
वृष्टेन तेन वाच्यं परिमाणं वारिणः प्रथमम् ॥ ३ ॥
केचिद् यथाभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये ।
गर्गवसिष्ठपराशरमतमेतद् द्वादशान् न परम् ॥ ४ ॥
येषु च भेष्वभिवृष्टं भूयः तेष्वेव वर्षति प्रायः ।
यदि नाप्यादिषु वृष्टं सर्वेषु तदा त्वनावृष्टिः ॥ ५ ॥
हस्ताप्यसौम्यचित्रापौष्णधनिष्ठासु षोडश द्रोणाः ।
शतभिषगेन्द्रस्वातिषु चत्वारः कृत्तिकासु दश ॥ ६ ॥
श्रवणे मघानुराधाभरणीमूलेषु दश चतुर्युक्ताः ।
फल्गुन्यां पंचकृतिः पुनर्वसौ विंशतिः द्रोणाः ॥ ७ ॥
एन्द्राग्न्याख्ये (एन्द्राग्नाख्ये) वैश्वे च विंशतिः सार्पभे दश त्र्यधिकाः ।
आहिर्बुध्न्यार्यम्णप्रजापत्येषु पंचकृतिः ।
पंचदशाजे पुष्ये च कीर्तिता वाजिभे दश द्वौ च ।
रौद्रेऽष्टादश कथिता द्रोणा निरुपद्रवेष्वेते (एषु) ॥ ८ ॥
रविरविसुतकेतुपीडिते भे क्षितितनयत्रिविधाद् भूताहते च ।
भवति च (हि) न शिवं न चापि वृष्टिः शुभसहिते निरुपद्रवे शिवं च ॥ ९ ॥

---

अध्याय २४ रोहिणीयोगाध्यायः
कनकशिलाचयविवरजतरुकुसुमासंगिमधुकरानुरुते ।
बहुविहगकलहसुरयुवतिगीतमन्द्रस्वनोपवने ॥ १ ॥
सुरनिलयशिखरिशिखरे बृहस्पतिः नारदाय यान् आह ।
गर्गपराशरकाश्यपमयाश्च यान् शिष्यसंघेभ्यः ॥ २ ॥
तान् अवलोक्य यथावत् प्राजापत्येन्दुसंप्रयोगार्थान् ।
अल्प (स्वल्प) ग्रन्थेनाहं तान् एवाभ्युद्यतो वक्तुम् ॥ ३ ॥
प्राजेशमाषाढतमिस्रपक्षे क्षपाकरेणोपगतं समीक्ष्य ।
वक्तव्यमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद् ग्रहचिन्तकेन ॥ ४ ॥
योगो यथानागत एव वाच्यः स धिष्ण्ययोगः करणे मयोक्तः ।
चन्द्रप्रमाणद्युतिवर्णमार्गैरुत्पातवातैश्च फलं निगद्यं (निगाद्यं) ॥ ५ ॥
पुरादुदग् यत् (यत) पुरतोऽपि वा स्थलं
त्र्यहोषितः तत्र हुताशतत्परः ।
ग्रहान् सनक्षत्रगणान् समालिखेत्
सधूपपुष्पैः बलिभिश्च पूजयेत् ॥ ६ ॥
सरत्नतोयौषधिभिश्चतुर्दिशं
तरुप्रवालापिहितैः सुपूजितैः ।
अकालमूलैः कलशैः अलंकृतं
कुशास्तृतं स्थण्डिलमावसेद् द्विजः ॥ ७ ॥
आलभ्य मन्त्रेण महाव्रतेन
बीजानि सर्वाणि निधाय कुंभे ।
प्लाव्यानि चामीकरदर्भतोयैः
होमो मरुद्वारुणसोम (सोम्य) मन्त्रैः ॥ ८ ॥
श्लक्ष्णां पताकामसितां विदध्याद्
दण्डप्रमाणां त्रिगुणोच्छ्रितां च ।
आदौ कृते दिग्ग्रहणे नभस्वान
ग्राह्यः तया योगगते शशांके ॥ ९ ॥
तत्रार्धमासाः प्रहरैः विकल्प्या
वर्षानिमित्तं दिवसाः तदंशैः ।
सव्येन गच्छन् शुभदः सदैव
यस्मिन् प्रतिष्ठा बलवान् स वायुः ॥ १० ॥
वृत्ते तु योगे अंकुरितानि यानि
सन्तीह बीजानि धृतानि कुंभे ।
येषां तु योऽंशो अंकुरितः तदंशः
तेषां विवृद्धिं समुपैति नान्यः ॥ ११ ॥
शान्तपक्षिमृगराविता दिशो निर्मलं वियदनिन्दितोऽनिलः ।
शस्यते शशिनि रोहिणीगते (रोहिणीयते) मेघमारुतफलानि वच्म्यतः ॥ १२ ॥
क्वचिदसितसितैः सितैः क्वचिग
क्वचिदसितैः भुजगैः इवांबुवाहैः ।
वलितजठरपृष्ठमात्रदृश्यैः
स्फुरिततडिद्रसनैर्वृतं विशालैः ॥ १३ ॥
विकसितकमलौदरावदातैः
अरुणकरद्युतिरञ्जितौपकण्ठैः ।
छुरितमिव वियद्घनैः विचित्रैः
मधुकरकुंकुमकिंशुकावदातैः ॥ १४ ॥
असितघननिरुद्धमेव वा
चलिततडित्सुरचापचित्रितम् ।
द्विपमहिषकुलाकुलीकृतं
वनमिव दावपरीतमंबरम् ॥ १५ ॥
अथवाञ्जनशैलशिलानिचयप्रतिरूपधरैः स्थगितं गगनम् ।
हिममौक्तिकशंखशशांककरद्युतिहारिभिः अंबुधरैः अथवा ॥ १६ ॥
तडिद्धैमकक्ष्यैः बलाकाग्रदन्तैः
स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः ।
विचित्रेन्द्रचापध्वजौच्छ्रायशोभैः
तमालालिनीलैः वृतं चाब्दनागैः ॥ १७ ॥
सन्ध्यानुरक्ते नभसि स्थितानाम्
इन्दीवरश्यामरुचां घनानाम् ।
वृन्दानि पीतांबरवेष्टितस्य

कान्तिं हरेश्चोरयतां यदा वा ॥ १८ ॥
सशिखिचातकदर्दुरनिःस्वनैः
यदि विमिश्रितमन्द्रपटुस्वनाः ।
खमवतत्य दिगन्तविलंबिनः ।
सलिलदाः सलिलौघमुचः क्षितौ ॥ १९ ॥
निगदितरूपैः जलधरजालैः
त्र्यहमवरुद्धं द्व्यहमथवाहः ।
यदि वियदेवं भवति सुभिक्षं
मुदितजना च प्रचुरजला भूः ॥ २० ॥
रूक्षैः अल्पैः मारुताक्षिप्तदेहैः
उष्ट्रध्वांक्षप्रेतशाखामृगाभैः ।
अन्येषां वा निन्दितानां स्वरूपैः (सरूपैः)
मूकैश्चाब्दैः नो शिवं नापि वृष्टिः ॥ २१ ॥
विगतघने वा वियति विवस्वान्
अमृदुमयूखः सलिलकृदेवम् ।
सर इव फुल्लं निशि कुमुदाढ्यं
खमुडुविशुद्धं यदि च सुवृष्ट्यै ॥ २२ ॥
पूर्वोद्भूतैः सस्यनिष्पत्तिः अब्दैः
आग्नेयाशासंभवैः अग्निकोपः ।
याम्ये सस्यं क्षीयते नैरृतेऽर्धं ( अर्घं अर्ध)
पश्चाज्जातैः शोभना वृष्टिः अब्दैः ॥ २३ ॥
वायव्योत्थैः वातवृष्टिः क्वचिग
पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः ।
श्रेष्ठं सस्यं स्थाणुदिक्संप्रवृद्धैः
वायुश्चैवं दिक्षु धत्ते फलानि ॥ २४ ॥
उल्कानिपाताः तडितोऽशनिश्च
दिग्दाहनिर्घातमहीप्रकंपाः ।
नादा मृगाणां सपतत्रिणां च
ग्राह्या यथैव अंबुधराः तथैव ॥ २५ ॥
नामांकितैः तैरुदगादिकुंभैः
प्रदक्षिणं श्रावणमासपूर्वैः
पूर्णैः स मासः सलिलस्य दाता
स्रुतैः (स्रुतः) अवृष्टिः परिकल्प्यमूनैः ॥ २६ ॥
अन्यैश्च कुंभैः नृपनामचिह्नैः
देशांकितैश्चाप्यपरैः तथैव
भग्नैः स्रुतैः न्यूनजलैः सुपूर्णैः
भाग्यानि वाच्यानि यथानुरूपम् ॥ २७ ॥
दूरगो निकटगोऽथवा शशी
दक्षिणे पथि यथा तथा स्थितः ।
रोहिणीं यदि युनक्ति सर्वथा
कष्टमेव जगतो विनिर्दिशेत् ॥ २८ ॥
स्पृशन्न् उदग् याति यदा शशांकः
तदा सुवृष्टिः बहुलौपसर्गा ।
असंस्पृशन् योगमुदक्समेतः
करोति वृष्टिं विपुलां शिवं च ॥ २९ ॥
रोहिणीशकटमध्यसंस्थिते
चन्द्रमस्यशरणीकृता जनाः ।
क्वापि यान्ति शिशुयाचिताशनाः
सूर्यतप्तपिठरांबुपायिनः ॥ ३० ॥
उदितं यदि शीतदीधितिं
प्रथमं पृष्ठत एति रोहिणी ।
शुभमेव तदा स्मरातुराः
प्रमदाः कामवशेन (कामिवशे च) संस्थिताः ॥ ३१ ॥
अनुगच्छति पृष्टतः शशी
यदि कामी वनितामिव प्रियाम् ।
मकरध्वजबाणखेदिताः
प्रमदानां वशगाः तदा नराः ॥ ३२ ॥
आग्नेय्यां दिशि चन्द्रमा यदि भवेत् तत्रौपसर्गो महान
नैरृत्यां समुपद्रुतानि निधनं सस्यानि यान्तीतिभिः ।
प्राजेशानिलदिक्स्थिते हिमकरे सस्यस्य मध्यश्चयो
याते स्थाणुदिशं गुणाः सुबह्वः सस्यार्घवृष्ट्यादयः
(वृद्ध्यादयः) ॥ ३३ ॥
ताडयेद् यदि च योगतारकामावृणोति वपुषा यदापि वा ।
ताडने भयमुशन्ति दारुणं छादने नृपबधो (नृपवधो)
अंगनाकृतः ॥ ३४ ॥
गोप्रवेशसमयेग्रतो वृषो याति कृष्णपशुः एव वा पुरः ।
भूरि वारि शबले तु मध्यमं नो सितेऽंबुपरिकल्पनापरैः ॥
३५ ॥
दृश्यते न यदि रोहिणीयुतश्चन्द्रमा नभसि तोयदावृते ।
रुग्भयं महदुपस्थितं तदा भूश्च भूरिजलसस्यसंयुता ॥ ३६ ॥

---

अध्याय २५ स्वातियोगाध्यायः
यद् रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे ।
आषाढशुक्ले निखिलं विचिन्त्यं योऽस्मिन् विशेषः तमहं
प्रवक्ष्ये ॥ १ ॥
स्वातौ निशांशे प्रथमेऽभिवृष्टे
सस्यानि सर्वाणि उपयान्ति वृद्धिम् ।
भागे द्वितीये तिलमुद्गमाषा
ग्रैष्मं तृतीयेऽस्ति न शारदानि ॥ २ ॥
वृष्टेऽह्निभागे प्रथमे सुवृष्टिः तद्वद् द्वितीये तु सकीटसर्पा ।
वृष्टिः तु मध्यापरभागवृष्टे निश्छिद्रवृष्टिः द्युनिशं प्रवृष्टे ॥ ३ ॥
सममुत्तरेण तारा चित्रायाः कीर्त्यते ह्यपांवत्सः ।
तस्यासन्ने चन्द्रे स्वातेः योगः शिवो भवति ॥ ४ ॥
सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे
वायुः वा चण्डवेगः सजलजलधरो वापि गर्जत्यजस्रम् ।
विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं
विज्ञेया प्रावृड एषा मुदितजनपदा सर्वसस्यैरुपेता ॥ ५ ॥
तथैव फाल्गुने चैत्रे वैशाखस्यासितेऽपि वा ।
स्वातियोगं विजानीयादाषाढे च विशेषतः ॥ ६ ॥

---

अध्याय २६ आषाढीयोगाध्यायः
आषाढ्यां समतुलिताधिवासितानाम्
अन्येद्युः यदधिकतामुपैति बीजम् ।

तद्वृद्धिः भवति न जायते यदूनं
मन्त्रोऽस्मिन् भवति तुलाभिमन्त्रणाय ॥१॥
(मन्त्र)
स्तोतव्या मन्त्रयोगेन सत्या देवी सरस्वती ।
दर्शयिष्यसि यत्सत्यं सत्ये सत्यव्रता ह्यसि ॥२॥
येन सत्येन चन्द्रार्कौ ग्रहा ज्योतिर्गणाः तथा ।
उत्तिष्ठन्तीह पूर्वेण पश्चादस्तं व्रजन्ति च ॥३॥
यत्सत्यं सर्ववेदेषु यत्सत्यं ब्रह्मवादिषु ।
यत्सत्यं त्रिषु लोकेषु तत्सत्यमिह दृश्यताम् ॥४॥
ब्रह्मणो दुहितासि त्वमादित्यैति प्रकीर्तिता ।
काश्यपी गोत्रतश्चैव नामतो विश्रुता तुला ॥५॥
क्षौमं चतुःसूत्रकसन्निबद्धं
षडंगुलं शिक्यकवस्त्रमस्याः ।
सूत्रप्रमाणम् च दशांगुलानि
षड एव कक्ष्यो (कक्षो) भयशिक्यमध्ये ॥६॥
याम्ये शिक्ये कांचनं सन्निवेश्यं
शेषद्रव्याणि उत्तरेऽंबूनि चैव (चैवं) ।
तोयैः कौप्यैः सेन्धवैः (स्यन्दिभिः) सारसैश्च
वृष्टिः (वर क्षृद्धिः) हीना मध्यमा चोत्तमा च ॥७॥
दन्तैः नागा गोहयाद्याश्च लोम्ना
हेम्ना भूपाः शिक्थकेन द्विजाद्याः ।
तद्वद् देशा वर्षमासा दिशश्च
शेषद्रव्याणि आत्मरूपस्थितानि ॥८॥
हैमी प्रधाना रजतेन मध्या तयोः अलाभे खदिरेण कार्या ।
विद्धः पुमान् येन शरेण सा वा तुला प्रमाणेन भवेद्
वितस्तिः ॥९॥
हीनस्य नाशोऽभ्यधिकस्य वृद्धिः तुल्येन तुल्यं तुलितं
तुलायाम् ।
एतत्तुलाकोशरहस्यमुक्तं प्राजेशयोगेऽपि नरो विदध्यात् ॥
१०॥
स्वातावषाढास्वथ रोहिणीषु
पापग्रहा योगगता न शस्ताः ।
ग्राह्यं तु योगद्वयमपि उपोष्य
यदाधिमासो द्विगुणीकरोति ॥११॥
त्रयोऽपि योगाः सदृशाः फलेन
यदा तदा वाच्यमसंशयेन ।
विपर्यये यत्त्विह रोहिणीजं
फलं तदेवाभ्यधिकं निगद्यम् ॥१२॥
निष्पत्तिः अग्निकोपो वृष्टिः मन्दाथ मध्यमा श्रेष्ठा ।
बहुजलपवना पुष्टा शुभा च पूर्वादिभिः पवनैः ॥१३॥
वृत्तायामाषाढ्याम् कृष्णचतुर्थ्यामजैकपादर्क्षे ।
यदि वर्षति पर्जन्यः प्रावृट शस्ता न चेन् न ततः ॥१४॥
आषाढ्याम् पौर्णमास्यां तु यद्यैशानोऽनिलो भवेत् ।
अस्तं गच्छति तीक्ष्णांशौ सस्यसंपत्तिरुत्तमा ॥१५॥

---

अध्याय २७ वातचक्राध्यायः
आषाढपौर्णमास्यां तु यद्यैशानोऽनिलो भवेत् ।
अस्तं गच्छति तीक्ष्णांशौ सस्य संपत्तिरुत्तमा ॥१॥
पूर्वः पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश
चन्द्रार्कांशुसटाकलापकलितो (सटाभिघातकलितो) वायुः
यदाकाशतः ।
नैकान्तस्थितनीलमेघपटला (पटलां) शारद्यसंवर्धिता
(संवर्धितां)
वासन्तौत्कटसस्यमण्डिततला सर्वा मही शोभते (तलां
विद्यात् तदा मेदिनीं) ॥२॥
यदा वह्नौ (अग्नेयो) वायुः वहति गगने खण्डिततनुः
(मलयशिखरास्फालनपटुः)
प्लवत्यस्मिन् योगे भगवति पतंगे प्रवसति ।
तदा नित्योद्दीप्ता ज्वलनशिखरालिंगिततला
स्वगात्रौच्छ्वासैः (उष्मोच्छ्वासैः) वमति वसुधा भस्मनिकरम्
॥३॥
तालीपत्रलतावितानतरुभिः शाखामृगान्नर्तयन्
योगेऽस्मिन् प्लवति ध्वनिः सपरुषो (ध्वनन्सुपरुषो) वायुः
यदा दक्षिणः ।
तद्वद् योगसमुत्थितः तु (सर्वोद्योगसमुन्नताश्च)
गजवत्तालांकुशैः घट्टिताः
कीनाशा इव मन्दवारिकणिका (कणिकान्) मुंचन्ति मेघाः
तदा ॥४॥
सूक्ष्मैलालवलीलवंगनिचयान् व्याघूर्णयन् सागरे
भानोः अस्तमये प्लवत्यविरतो वायुः यदा नैरृतः
क्षुत्तृष्णावृत (तृष्णामृत) मानुषास्थिशकलप्रस्तारभारच्छदा
मत्ता प्रेतवधूरिवोग्रचपला भूमिः तदा लक्ष्यते ॥५॥
यदा रेणूत्पातैः प्रविचलसटाटोपचपलः
(प्रविकटसटाटोपचपलः)
प्रवातः पश्चागेद् (पश्चार्धे) दिनकरकरापातसमये ।
तदा सस्योपेता प्रवरनिकराबद्धसमरा (प्रवरनृव्राबद्धसमरा)
क्षितिः स्थानस्थानेष्व (धरा स्थाने स्थानेष्व)
अविरतवसामांसरुधिरा ॥६॥
आषाढीपर्वकाले यदि किरणपतेः अस्तकालोपपत्तौ
वायव्यो वृद्धवेगः पवनघनवपुः पन्नगार्द्धानुकारि (प्लवति
धनरिपुः पन्नगादानुकारी) ।
जानीयाद् वारिधाराप्रमुदितमुदितामुक्त (मुदितां मुक्त)
मण्डूककण्ठां
सस्यौह्लासएकचिह्नां सुखबहुलतया भाग्यसेनामिवौर्वीम् ॥
७॥
मेरुग्रस्तमरीचिमण्डलतले ग्रीष्मावसाने रवौ
वात्यामोदिकदंबगन्धसुरभिः वायुः यदा चोत्तरः ।
विद्युद्भ्रान्तिसमस्तकान्तिकलना मत्ताः तदा तोयदा
उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यंबुभिः ॥८॥
वृत्तायामाषाढ्यां कृष्णचतुर्थ्यामजैकपादर्क्षे
(ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत्) ।
यदि वर्षति पर्जन्यः प्रावृत् शस्ता न चेन् न तदा
(पुन्नागागुरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः ॥९॥

नष्टचन्द्रार्ककिरनं नष्टतारं न चेन् नभः (आपूर्णोदकयौवना वसुमती संपन्नसस्याकुला) ।
न तां भद्रपदां मन्ये यत्र देवो न वर्षति
(धर्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्णा तदा) ॥१०॥

---

अध्याय २८ सद्योवर्षणाध्यायः
वर्षाप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।
सौम्यैः दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमंभः
प्रावृट्काले सृजति न चिरात्चन्द्रवद् भार्गवोऽपि ॥१॥
आर्द्रं द्रव्यं स्पृशति यदि वा वारि तत्संज्ञकं वा
तोयासन्नो भवति यदि वा तोयकार्यौन्मुखो वा ।
प्रष्टा वाच्यः सलिलमचिरादस्ति निःसंशयेन
पृच्छाकाले सलिलमिति वा श्रूयते यत्र शब्दः ॥२॥
उदयशिखरिसंस्थो दुर्निरीक्ष्योऽतिदीप्त्या
द्रुतकनकनिकाशः स्निग्धवैदूर्यकान्तिः ।
तदहनि कुरुतेऽभः तोयकाले विवस्वान
प्रतपति यदि चौच्चैः खं गतोऽतीव तीक्ष्णम् ॥३॥
विरसमुदकं गोनेत्राभं वियद्विमला दिशो
लवणविकृतिः काकाण्डाभं यदा च भवेत्नभः ।
पवनविगमः पोप्लूयन्ते झषाः स्थलगामिनो
रसनमसकृत्मण्डूकानां जलागमहेतवः ॥४॥
मार्जारो भृशमवनिं नखैः लिक्खन्तो (लिखन्ते)
लोहानां मलनिचयः सविस्रगन्धः ।
रथ्यायां शिशुरचिताः (शिशुनिचिताः) च सेतुबन्धाः ।
संप्राप्तं जलमचिरात्निवेदयन्ति ॥५॥
गिरयोऽञ्जनचूर्णसन्निभा (अञ्जनपुञ्जसन्निभा) यदि वा बाष्पनिरुद्धकन्दराः ।
कृकवाकुविलोचनौपमाः परिवेषाः शशिनश्च वृष्टिदाः ॥६॥
विना उपघातेन पिपीलिकानाम्
अण्डौपसंक्रान्तिः अहिव्यवायः ।
द्रुमावरोहः (द्रुमाधिरोहः) च भुजंगमानां
वृष्टेः निमित्तानि गवां प्लुतं च ॥७॥
तरुशिखरओपगताः कृकलासा
गगनतलस्थितदृष्टिनिपाताः ।
यदि च गवां रविवीक्षणमूर्ध्वं
निपतति वारि तदा न चिरेण ॥८॥
नैच्छन्ति विनिर्गमं गृहाद् धुन्वन्ति श्रवणान् खुरान् अपि ।
पशवः पशुवग कुक्कुरा (कुर्कुरा) यद्वांभः पततीति निर्दिशेत् ॥९॥
यदा स्थिता गृहपटलेषु कुक्कुरा (कुर्कुरा)
रुदन्ति (भवन्ति) वा यदि विततं वियत्मुखाः (दिवोन्मुखाः) ।
दिवा तडिद् यदि च पिनाकिदिग्भवा
तदा क्षमा भवति समैव वारिणा (स आतोवारोंआ) ॥१०॥
शुककपोतविलोचनसन्निभो
मधुनिभश्च यदा हिमदीधितिः ।
प्रतिशशी च यदा दिवि राजते
पतति वारि तदा न चिरेण च (चिराद् दिवः) ॥११॥
स्तनितं निशि विद्युतो दिवा
रुधिरनिभा यदि दण्डवत्स्थिताः ।
पवनः पुरतश्च शीतलो
यदि सलिलस्य तदाआगमो भवेत् ॥१२॥
वल्लीनां गगनतलौन्मुखाः प्रवालाः
स्नायन्ते यदि जलपांशुभिः विहंगाः ।
सेवन्ते यदि च सरीसृपाः तृणाग्राण्यस्
आसन्नो भवति तदा जलस्य पातः ।
मयूरशुकचाषचातकसमानवर्णा यदा
जपाकुसुमपंकजद्युतिमुषश्च सन्ध्याघनाः ।
जलोर्मिनगनक्रकच्छपवराहमीनोपमाः
प्रभूतपुटसंचया न तु चिरेण यच्छन्त्यपः ॥१३॥
पर्यन्तेषु सुधाशशांकधवला मध्येऽञ्जनालित्विषः
स्निग्धा नैकपुटाः क्षरज्जलकणाः सोपानविच्छेदिनः ।
माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राग् वा अंबुपाशौद्भवा
ये ते वारिमुचः त्यजन्ति न चिरादंभः प्रभूतं भुवि ॥१४॥
शक्रचापपरिघप्रतिसूर्या रोहितोऽथ तडितः परिवेषः ।
उद्गमास्तमये यदि भानोः आदिशेत् प्रचुरमंबु तदाशु ॥१५॥
यदि तित्तिरपत्रनिभं गगनं
मुदिताः प्रवदन्ति च पक्षिगणाः ।
उदयास्तमये सवितुः द्युनिशं
विसृजन्ति घना न चिरेण जलम् ॥१६॥
यद्यमोघकिरणाः सहस्रगोः
अस्तभूधरकरा इवौच्छ्रिताः ।
भूमं च रसते यदांबुदः
तन्महद् भवति वृष्टिलक्षणं ॥१७॥
प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः ।
सूर्यसुतान् नवपंचमगो वा सप्तमगश्च जलाआगमनाय ॥१८॥
प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसंक्रमे च ।
पक्षक्षये तीक्ष्णकरायनान्ते वृष्टिः गतेऽर्के नियमेन चार्द्राम् ॥१९॥
समागमे पतति जलं ज्ञशुक्रयोः ज्ञजीवयोः गुरुसितयोश्च संगमे ।
यमारयोः पवनहुताशजं भयं ह्यदृष्टयोः असहितयोश्च सद्ग्रहैः ॥२०॥
अग्रतः पृष्ठतो वापि ग्रहाः सूर्यावलंबिनः ।
यदा तदा प्रकुर्वन्ति महीमेकार्णवामिव ॥२१॥
प्रविशति यदि खद्योतो जलदसमीपेषु रजनीषु ।
केदारपूरमधिकं वर्षति देवः तदा न चिरात् ॥२२॥
वर्षत्यपि रटति यदा गोमायुश्च प्रदोषवेलायाम् ।
सप्ताहं दुर्दिनमपि तदा पयो नात्र सन्देहः ॥२३॥

---

अध्याय २९ कुसुमलताध्यायः
फलकुसुमसंप्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् ।

सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् ॥१॥
शालेन कलमशाली रक्ताशोकेन रक्तशालिश्च ।
पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः ॥२॥
न्यग्रोधेन तु यवकः तिन्दुकवृद्ध्या च षष्टिको भवति ।
अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् ॥३॥
जंबूभिः तिलमाषाः शिरीषवृद्ध्या च कंगुनिष्पत्तिः ।
गोधूमाश्च मधूकैः यववृद्धिः सप्तपर्णेन ॥४॥
अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदशनैः ।
बदरीभिश्च कुलत्थांश्चिरविल्वेन (चिरबिल्वेन) आदिशेत्मुद्गान्
॥५॥
अतसी वेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः ।
तिलकेन शंखमौक्तिकरजतानि अथ चैंगुदेन शणाः (शणः)
॥६॥
किरणश्च हस्तिकर्णैः आदेश्या वाजिनोऽश्वकर्णेन ।
गावश्च पाटलाभिः कदलीभिः अजाविकं भवति ॥७॥
चंपककुसुमैः कनकं विद्रुमसंपग बन्धुजीवेन ।
कुरवक (कुरुवक) वृद्ध्या वज्रं वैदूर्यं निन्दिकावर्तैः ॥८॥
विन्द्याग सिन्धुवारेण मौक्तिकं कारुकाः (कुंकुमं) कुसुंभेन ।
रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥९॥
श्रेष्ठी सुवर्णपुष्पात् (पुष्पैः) पद्मैः विप्राः पुरोहिताः कुमुदैः ।
सौगन्धिकेन बलपतिः अर्केण हिरण्यपरिवृद्धिः ॥१०॥
आम्रैः क्षेमं भल्लातकैः भयं पीलुभिः तथारोग्यम् ।
खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥११॥
पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन ।
निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥१२॥
दूर्वाकुशकुसुमाभ्यामिक्षुः वह्निश्च कोविदारेण ।
श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति ॥१३॥
यस्मिन् काले (देशे) स्निग्धनिश्छिद्रपत्राः
संदृश्यन्ते वृक्षगुल्मा लताश्च ।
तस्मिन् वृष्टिः शोभना सप्रदिष्टा
रूक्षैश्छिद्रैः अल्पमंभः प्रदिष्टम् ॥१४॥

## अध्याय ३० सन्ध्यालक्षणाध्यायः

अर्धास्तमितानुदितात् सूर्यादस्पष्टभं नभो यावत् ।
तावत् सन्ध्याकालश्चिह्नैः एतैः फलं चास्मिन् ॥१॥
मृगशकुनि (शकुन) पवनपरिवेषपरिधिपरिघाभ्रवृक्षसुरचापैः
।
गन्धर्वनगररविकरदण्डरजः स्नेहवर्णैश्च ॥२॥
भैरवमुच्चैः विरुवन् मृगोऽसकृद् ग्रामघातमाचष्टे ।
रविदीप्तो दक्षिणतो महास्वनः सैन्यघातकरः ॥३॥
अपसव्ये संग्रामः सव्ये सेनासमागमः शान्ते ।
मृगचक्रे पवने वा सन्ध्यायां मिश्रगे वृष्टिः ॥४॥
दीप्तमृगाण्डजविरुता प्राक् सन्ध्या देशनाशमाख्याति ।
दक्षिणदिक्स्थैः विरुता ग्रहणाय पुरस्य दीप्तास्यैः ॥५॥
गृहतरुतोरणमथने सपांशुलोष्टौत्करेऽनिले प्रबले ।
भैरवरावे रूक्षे खगपातिनि चाशुभा सन्ध्या ॥६॥
मन्दपवनावघट्टितचलितपलाशद्रुमा विपवना वा ।
मधुरस्वरशान्तविहंगमृगरुता पूजिता सन्ध्या ॥७॥
सन्ध्याकाले स्निग्धा दण्डतडित्मत्स्यपरिधिपरिवेषाः ।
सुरपतिचापैरावतरविकिरणाश्चाशु वृष्टिकरः ॥८॥
विच्छिन्नविषमविध्वस्तविकृतकुटिलापसव्यपरिवृत्ताः ।
तनुह्रस्वविकलकलुषाश्च विग्रहावृष्टिदाः किरणाः ॥९॥
उद्द्योतिनः प्रसन्ना ऋजवो दीर्घाः प्रदक्षिणावर्ताः ।
किरणाः शिवाय जगतो वितमस्के नभसि भानुमतः ॥१०॥
शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः ।
अव्युच्छिन्ना ऋजवो वृष्टिकराः ते त्व (हि) अमोघाख्याः ॥
११॥
कल्माषबभ्रुकपिला विचित्रमाञ्जिष्ठहरितशबलाभाः ।
त्रिदिवानुबन्धिनोऽवृष्टयेऽल्पभयदाः तु सप्ताहात् ॥१२॥
ताम्रा बलपतिमृत्युं पीतारुणसन्निभाश्च तद् व्यसनम् ।
हरिताः पशुसस्यबधं धूमसवर्णा गवां नाशम् ॥१३॥
माञ्जिष्टाभाः शस्त्राग्निसंभ्रमं बभ्रवः पवनवृष्टिम् ।
भस्मसदृशाः त्ववृष्टिं तनुभावं शबलकल्माषाः ॥१४॥
बन्धूकपुष्पाञ्जनचूर्णसन्निभं
सान्ध्यं रजोऽभ्येति यदा दिवाकरम् ।
लोकाः तदा रोगशतैः निपीड्यते
शुक्लं रजो लोकविवृद्धिशान्तये ॥१५॥
रविकिरणजलदमरुतां संघातो दण्डवत् स्थितो दण्डः ।
स विदिक्स्थितो नृपाणामशुभो दिक्षु
द्विजादीनामद्विजातीनां) ॥१६॥
शस्त्रभयातंककरो दृष्टः प्रान्मध्यसन्धिषु दिनस्य ।
शुक्लाद्यो विप्रादीन् यदभिमुखः तां निहन्ति दिशम् ॥१७॥
दधिसदृशाग्रो नीलो भानुच्छादी खमध्यगोभ्रतरुः ।
पीतच्छुरिताश्च घना घनमूला भूरिवृष्टिकराः ॥१८॥
अनुलोमगेऽभ्रवृक्षे शमं गते यायिनो नृपस्य बधः ।
बालतरुप्रतिरूपिणि युवराजामात्ययोः मृत्युः ॥१९॥
कुवलयवैदूर्यांबुजकिञ्जल्काभा प्रभञ्जनौन्मुक्ता ।
सन्ध्या करोति वृष्टिं रविकिरणौद्भासिता सद्यः ॥२०॥
अशुभाकृतिघनगन्धर्वनगरनीहारधूमपांशुयुता
(पांशुधूमयुता) ।
प्रावृषि करोत्यवग्रहमन्यतौ शस्त्रकोपकरी ॥२१॥
शिशिरादिषु वर्णाः शोणपीतसितचित्रपद्मरुधिरनिभाः ।
प्रकृतिभवाः सन्ध्यायां स्वर्तौ शस्ता विकृतिः अन्या ॥२२॥
आयुधभृन् नररूपं छिन्नाभ्रं परभयाय रविगामि ।
सितखपुरेऽर्काक्रान्ते पुरलाभो भेदने नाशः ॥२३॥
सितसितान्तघनावरणं रवेः
भवति वृष्टिकरं यदि सव्यतः ।
यदि च वीरणगुल्मनिभैः घनैः
दिवसभर्तुः अदीप्तदिगुद्भवैः ॥२४॥
नृपविपत्तिकरः परिघः सितः क्षतजतुल्यवपुः बलकोपकृत् ।
कनकरूपधरो बलवृद्धिदः सवितुरुद्गमकालसमुत्थितः ॥२५॥
उभयपार्श्वगतौ परिधी रवेः
प्रचुरतोयकरौ (कृतौ) वपुषान्वितौ ।

अथ स मस्तककुप्परिचारिणः
परिधयोऽस्ति कणोऽपि न वारिणः ॥ २६ ॥
ध्वजातपत्रपर्वतद्विपाश्वरूपधारिणः ।
जयाय सन्ध्ययोः घना रणाय रक्तसन्निभाः ॥ २७ ॥
पलालधूमसंचयस्थितौपमा बलाहकाः ।
बलान्यरूक्षमूर्तयो विवर्धयन्ति भूभृताम् ॥ २८ ॥
विलंबिनो द्रुमौपमाः खरारुणप्रकाशिनः ।
घनाः शिवाय सन्ध्ययोः पुरौपमाः शुभावहाः ॥ २९ ॥
दीप्तविहंगशिवामृगघुष्टा दण्डरजःपरिघादियुता च ।
प्रत्यहमर्कविकारयुता वा देशनरेशसुभिक्षबधाय ॥ ३० ॥
प्राची तत्क्षणमेव नक्तमपरा सन्ध्या त्र्यहाद् वा फलं
सप्ताहात् परिवेषरेणुपरिघाः कुर्वन्ति सद्यो न चेत् ।
तद्वत् सूर्यकरेन्द्रकार्मुकतडित्प्रत्यर्कमेघानिलाः
तस्मिन्न् एव दिनेऽष्टमेऽथ विहगाः सप्ताहपाका मृगाः ॥ ३१ ॥
एकं दीप्त्या योजनं भाति सन्ध्या
विद्युद्भासा षट प्रकाशीकरोति ।
पंचाब्दानां गर्जितं याति शब्दो
नास्तीयत्ता केचिद् (काचिद्) उल्कानिपाते ॥ ३२ ॥
प्रत्यर्कसंज्ञः परिधिः तु तस्य
त्रियोजनाभः (त्रियोजना भा) परिघस्य पंच ।
षट्पंचदृश्यं परिवेषचक्रं
दशामरेशस्य धनुः विभाति ॥ ३३ ॥

---

## अध्याय ३१ दिग्दाहलक्षणाध्यायः

दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः ।
यश्चारुणः स्यादपसव्यवायुः सस्यस्य नाशं स करोति दृष्टः ॥ १ ॥
योऽतीव दीप्त्या कुरुते प्रकाशं
छायामपि व्यञ्जयतेऽर्कवद् यः ।
राज्ञो महद् वेदयते भयं स
शस्त्रप्रकोपं क्षतजानुरूपः ॥ २ ॥
प्राक् क्षत्रियाणां सनरेश्वराणां
प्राग् दक्षिणे शिल्पिकुमारपीडा ।
याम्ये सहोग्रैः पुरुषैः तु वैश्या
दूताः पुनः भूप्रमदाश्च कोणे ॥ ३ ॥
पश्चात् तु शूद्राः कृषिजीविनश्च
चौराः तुरंगैः सह वायुदिक्स्थे
पीडां व्रजन्त्युत्तरतश्च विप्राः
पाखण्डिनो (पाषण्डिनो) वाणिजकाश्च शार्व्याम् ॥ ४ ॥
नभः प्रसन्नं विमलानि भानि
प्रदक्षिणं वाति सदागतिश्च ।
दिशां च दाहः कनकावदातो
हिताय लोकस्य सपार्थिवस्य ॥ ५ ॥

---

## अध्याय ३२ भूकंपलक्षणाध्यायः

क्षितिकंपमाहुः एके बृहदन्तर्जलनिवासिसत्त्वकृतम् ।
भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये ॥ १ ॥
अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं करोत्यन्ये (एके) ।
केचित् त्वदृष्टकारितमिदमन्ये प्राहुः आचार्याः ॥ २ ॥
गिरिभिः पुरा सपक्षैः वसुधा प्रपतद्भिरुत्पद्भिश्च ।
आकंपिता पितामहमाहामरसदसि सव्रीडम् ॥ ३ ॥
भगवन् नाम ममएतत्त्वया कृतं यदचलैति तन् न तथा ।
क्रियतेऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य ॥ ४ ॥
तस्याः सगद्गदगिरं (सगद्गदगिरं) किंचित् स्फुरिताधरं विनतमीषत् ।
साश्रुविलोचनमाननमालोक्य पितामहः प्राह ॥ ५ ॥
मन्युं हरेन्द्र धात्र्याः क्षिप कुलिशं शैलपक्षभंगाय ।
शक्रः कृतमित्युक्त्वा मा भैः इति वसुमतीमाह ॥ ६ ॥
किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम् ।
प्राग् द्वित्रिचतुर्भागेषु दिननिशोः कंपयिष्यन्ति ॥ ७ ॥
चत्वार्यार्यम्णाद्यानि आदित्यं मृगशिरोऽश्वयुक् चेति ।
मण्डलमेतद् वायव्यमस्य रूपाणि सप्ताहात् ॥ ८ ॥
धूमाकुलीकृताशे नभसि नभस्वान् रजः क्षिपन् भौमम् ।
विरुजन् द्रुमांश्च विचरति रविः अपटुकरावभासी च ॥ ९ ॥
वायव्ये भूकंपे सस्यांबुवनौषधीक्षयोऽभिहितः ।
श्वयथुश्वासौन्मादज्वरकासभवो (भवा) वणिक्पीडा ॥ १० ॥
रूपायुधभृद्वैद्यास्त्रीकविगान्धर्वपण्यशिल्पिजनाः ।
पीड्यन्ते सौराष्ट्रककुरुमघदशार्णमत्स्याश्च ॥ ११ ॥
पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि ।
वर्गो हौतभुजोऽयं करोति रूपाणि अथैतानि ॥ १२ ॥
तारा उल्कापातावृतमादीप्तमिवांबरं सदिग्दाहम् ।
विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः ॥ १३ ॥
आग्नेयेऽंबुदनाशः सलिलाशयसंक्षयो नृपतिवैरम् ।
दद्रूविचर्चिकाज्वरविसर्पिकाः पाण्डुरोगश्च ॥ १४ ॥
दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकांगबाह्लीकाः ।
तंगणकलिंगवंगद्रविडाः शबरा अनेकविधाः (शबराश्च नैकविधाः) ॥ १५ ॥
अभिजित्श्रवणधनिष्ठाप्राजापत्येन्द्रवैश्वमैत्राणि ।
सुरपतिमण्डलमेतद् भवन्ति चाप्यस्य रूपाणि (च अस्य स्वरूपाणि) ॥ १६ ॥
चलिताचलवर्ष्माणो गंभीरविराविणः तडिद्वन्तः (तडित्वन्तः) ।
गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः ॥ १७ ॥
एन्द्रं स्तुत (श्रुति) कुलजातिख्यातावनिपालगणपविध्वंसि ।
अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय ॥ १८ ॥
काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः ।
अर्बुदसुराष्ट्र (सुवास्तु) मालवपीडाकरमिष्टवृष्टिकरम् ॥ १९ ॥
पौष्णाप्याद्राश्लेषामूलाहिर्बुध्न्यवरुणदेवानि ।
मण्डलमेतद् वारुणमस्यापि भवन्ति रूपाणि ॥ २० ॥
नीलोत्पलालिभिन्नाञ्जनत्विषो मधुररराविणो बहुलाः ।
तडिदुद्भासितदेहा धारांकुर (कुश) वर्षिणो जलदाः ॥ २१ ॥

वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति ॥ २२॥
षड्भिः मासैः कंपो द्वाभ्यां पाकं च याति निर्घातः ।
अन्यान् अपि उत्पातान् जगुः अन्ये मण्डलैः एतैः ॥ २३॥
उल्का हरिश्चन्द्रपुरं रजश्च निर्घातभूकंपककुप्प्रदाहाः ।
वातोऽतिचण्डो ग्रहणं रवीन्द्वोः नक्षत्रतारागणवैकृतानि ॥ २४॥
व्यभ्रे वृष्टिः वैकृतं वातवृष्टिः धूमोऽनग्नेः विस्फुलिग्गार्चिषो वा ।
वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावेन्द्रं कार्मुकं दृश्यते वा ॥ २५॥
सन्ध्याविकाराः परिवेषखण्डा नद्यः प्रतीपा दिवि तूर्यनादाः ।
अन्यग यत्स्यात् प्रकृतेः प्रतीपं तन्मण्डलैः एव फलं निगाद्यम ॥ २६॥
हन्त्येन्द्रो वायव्यं वायुश्चाप्येन्द्रमेवमन्योन्यम् ।
वारुणहौतभुजावपि वेलानक्षत्रजाः कंपाः ॥ २७॥
प्रथितनरेश्वरमरणव्यसनानि आग्नेयवायुमण्डलयोः ।
क्षुद्भयमरकावृष्टिभिरुपताप्यन्ते जनाश्च अपि ॥ २८॥
वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दयो लोके ।
गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः ॥ २९॥
पक्षैश्चतुर्भिः अनिलः त्रिभिः अग्निः देवराट च सप्ताहात् ।
सद्यः फलति च वरुणो येषु न कालोऽङ्गुतेषूक्तः ॥ ३०॥
चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् ।
सलिलपतिः अशीतिसंयुतं कुलिशधरोऽभ्यधिकं च षष्टितः (षष्टिकं) ॥ ३१॥
त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे चे ।
यदि भवति भूमिकंपः प्रधाननृपनाशनो भवति ॥ ३२॥

---

अध्याय ३३ उल्कालक्षणाध्यायः
दिवि भुक्तशुभफलानां पततां रूपाणि यानि तानि उल्काः ।
धिष्ण्यौल्काशनिविद्युत्तारा इति पंचधा भिन्नाः ॥ १॥
उल्का पक्षेण फलं तद्वद् धिष्ण्याशनिः त्रिभिः पक्षैः ।
विद्युदहोभिः षड्भिः तद्वत् तारा विपाचयति ॥ २॥
तारा फलपादकरी फलार्धदात्री प्रकीर्तिता धिष्ण्या ।
तिस्रः संपूर्णफला विद्युदथौल्काशनिश्चेति ॥ ३॥
अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु ।
निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥ ४॥
विद्युत् सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा ।
कुतिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता ॥ ५॥
धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम् ।
ज्वलितांगारनिकाशा द्वौ हस्तौ सा प्रमाणेन ॥ ६॥
तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा ।
तिर्यगधश्च ऊर्ध्वं वा याति वियत्युह्यमाना इव ॥ ७॥
उल्का शिरसि विशाला निपतन्ती वर्धते प्रतनुपुच्छा ॥ ८॥
दीर्घा च भवति (भवति च) पुरुषं भेदा बहवो भवत्यस्याः ॥ ९॥
प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलांगलमृगाभाः ।
गोधाहिधूमरूपाः पापा या चौभयशिरस्का ॥ १०॥
ध्वजझषगिरिकरि (करिगिरि)
कमलेन्दुतुरगसन्तप्तरजतहंसाभाः ।
श्रीवृक्ष (वत्स, श्रीवृक्ष) वज्रशंखस्वस्तिकरूपाः शिवसुभिक्षाः ॥ ११॥
अंबरमध्याद् बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय ।
बंभ्रमती गगनोपरि विभ्रममाख्याति लोकस्य ॥ १२॥
संस्पृशती चन्द्रार्कौ तद्विसृता वा सभूप्रकंपा च ।
परचक्रागमनृपवधदुर्भिक्षावृष्टिभयजननी ॥ १३॥
पौरैतरघ्नमुल्कापसव्यकरणं दिवाकरहिमांशवोः ।
उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः ॥ १४॥
शुक्ला रक्ता पीता कृष्णा चौल्का द्विजादिवर्णघ्नी ।
क्रमशश्चैतान् हन्युः मूर्धौरःपार्श्वपुच्छस्थाः ॥ १५॥
उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा ।
ऋज्वी स्निग्धाखण्डा नीचोपगता च तद्वृद्ध्यै ॥ १६॥
श्यावारुण (श्यामा वारुण) नीलासृग्दहनासितभस्मसन्निभा रूक्षा ।
सन्ध्यादिनजा वक्रा दलिता च परागमभयाय ॥ १७॥
नक्षत्रग्रहघातैः (घाते) तद्भक्तीनां क्षयाय निर्दिष्टा ।
उदये घ्नती रवीन्दू पौरैतरमृत्यवेऽस्ते वा ॥ १८॥
भाग्यादित्यधनिष्टामूलेषूल्काहतेषु युवतीनाम् ।
विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु ॥ १९॥
ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम् ।
क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते ॥ २०॥
कुर्वन्त्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम् ।
शक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडाम् ॥ २१॥
आशाग्रहौपघाते तद्देश्यानां खले कृषिरतानाम् ।
चैत्यतरौ संपतिता सत्कृतपीडां करोत्युल्का ॥ २२॥
द्वारि पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः ।
ब्रह्मायतने विप्रान् विनिहन्याद् गोमिनो गोष्ठे ॥ २३॥
क्ष्वेडास्फोटितवादितगीतौत्कुष्टस्वना भवन्ति यदा ।
उल्कानिपातसमये भयाय राष्ट्रस्य सनृपस्य ॥ २४॥
यस्याश्चिरं तिष्ठति खेऽनुषंगो
दण्डाकृतिः सा नृपतेः भयाय ।
या चौह्यते तन्तुधृता इव खस्था
या वा महेन्द्रध्वजतुल्यरूपा ॥ २५॥
श्रेष्ठिनः प्रतीपगा तिर्यगा नृपांगनानां (नृपांगनाः) ।
हन्त्यधोमुखी नृपान् ब्राह्मणान् अथ ऊर्ध्वगा ॥ २६॥
बर्हि (वर्हि) पुच्छरूपिणी लोकसंक्षयावहा ।
सर्पवत् प्रसर्पती (प्रसर्पिणी) योषितामनिष्टदा ॥ २७॥
हन्ति मण्डला पुरं छत्रवत् पुरोहितम् ।
वंशगुल्मवत् स्थिता राष्ट्रदोषकारिणी ॥ २८॥
व्यालसूकरौपमा विस्फुलिंगमालिनी ।
खण्डशोऽथवा गता सस्वना च पापदा ॥ २९॥
सुरपितचापप्रतिमा राज्यं नभसि विलीना जलदान् हन्ति ।

पवनविलोमा कुटिलं याता न भवति शस्ता विनिवृत्ता वा ॥ ३० ॥
अभिभवति यतः पुरं बलं वा भवति भयं तत एव पार्थिवस्य ।
निपतति च यया दिशा प्रदीप्ता जयति रिपून् अचिरात् तया प्रयातः ॥ ३१ ॥

---

अध्याय ३४ परिवेषलक्षणाध्यायः
सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः ।
नानावर्णाकृतयः तन्वभ्रे व्योम्नि परिवेषाः ॥ १ ॥
ते रक्तनीलपाण्डुरकापोताभ्राभशबलहरित (हरि) शुक्लाः ।
इन्द्रयमवरुणनिरृतिश्वसनेशपितामहांबु (अग्नि) कृताः ॥ २ ॥
धनदः करोति मेचकमन्योन्यगुणाश्रयेण चाप्यन्ये ।
प्रविलीयते मुहुर्मुहुः अल्पफलः सोऽपि वायुकृतः ॥ ३ ॥
चाषशिखिरजततैलक्षीरजलाभः स्वकालसंभूतः ।
अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः ॥ ४ ॥
सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः ।
असकलशकटशरासनशृंगाटकवत् स्थितः पापः ॥ ५ ॥
शिखिगलसमेऽतिवर्ष्णे बहुवर्णे नृपवधो भयं धूम्रे ।
हरिचापनिभे युद्धानि अशोककुसुमप्रभे चापि ॥ ६ ॥
वर्णेनएकेन यदा बहुलः स्निग्धः क्षुराभ्रकाकीर्णः ।
स्वऋतौ सद्यो वर्षं करोति पीतश्च दीप्तार्कः ॥ ७ ॥
दीप्तमृगविहंग (विहंगमृग) रुतः कलुषः सन्ध्यात्रयोत्थितोऽतिमहान् ।
भयकृत् तडिदुल्काद्यैः हतो नृपं हन्ति शस्त्रेण ॥ ८ ॥
प्रतिदिनमर्कहिमांश्वोः अहर्निशं रक्तयोः नरेन्द्रवधः ।
परिविष्टयोः अभीक्षणं लग्नास्तमय (अस्तनभः) स्थयोः तद्वत् ॥ ९ ॥
सेनापतेः भयकरो द्विमण्डलो नातिशस्त्रकोपकरः ।
त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम् ॥ १० ॥
वृष्टिः त्र्यहेण मासेन विग्रहो वा ग्रहेन्दुभनिरोधे ।
होराजन्माधिपयोः जन्मर्क्षे वांशुभो (वाशुभो) राज्ञः ॥ ११ ॥
परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः ।
जनयति च वातवृष्टिं स्थावरकृषिकृन् निहन्ता च ॥ १२ ॥
भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम् ।
जीवे परिवेषगते पुरोहितामात्यनृपपीडा ॥ १३ ॥
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च ।
शुक्रे यायिक्षत्रियराज्ञी (राज्ञां) पीडा प्रियं चान्नम् ॥ १४ ॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ ।
परिविष्टे गर्भभयं राहौ व्याधिः नृपभयं च ॥ १५ ॥
युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयोः ग्रहयोः ।
दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम् ॥ १६ ॥
याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः ।
प्रलयमिव विद्धि जगतः पंचादिषु मण्डलस्थेषु ॥ १७ ॥
ताराग्रहस्य कुर्यात् पृथग् एव समुत्थितो नरेन्द्रवधम् ।
नक्षत्राणामथवा यदि केतोः नौदयो भवति ॥ १८ ॥
विप्रक्षत्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः ।
श्रेणीपुरकोशानां पंचम्यादिष्वशुभकारी ॥ १९ ॥
युवराजस्याष्टम्यां परतः त्रिषु पार्थिवस्य दोषकरः ॥ २० ॥
पुररोधो द्वादश्यां सैन्यक्षोभः त्रयोदश्याम् ॥ २१ ॥
नरपतिपत्नीपीडां परिवेषोऽभ्युत्थितश्चतुर्दश्याम् ।
कुर्यात् तु पंचदश्यां पीडां मनुजाधिपस्यएव ॥ २२ ॥
नागरकाणामभ्यन्तरस्थिता यायिनां च बाह्यस्था ।
परिवेषमध्यरेखा विज्ञेयाक्रन्दसाराणाम् ॥ २३ ॥
रक्तः श्यामो रूक्षश्च भवति येषां पराजयः तेषाम् ।
स्निग्धः श्वेतो द्युतिमान् येषां भागो जयः तेषाम् ॥ २४ ॥

---

अध्याय ३५ इन्द्रायुद्धलक्षणाध्यायः
सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे ।
वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥ १ ॥
केचिदनन्तकुलौरगनिःश्वासौद्भूतमाहुः आचार्याः ।
तद् यायिनां नृपाणामभिमुखमजयावहं भवति ॥ २ ॥
अच्छिन्नमवनिगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम् ।
द्विरुदितमनुलोमं च प्रशस्तमंभः प्रयच्छति च ॥ ३ ॥
विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मरककारि ।
पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः ॥ ४ ॥
जलमध्येऽनावृष्टिः भुवि सस्यवधः तरौ शिते व्याधिः ।
वाल्मीके (वल्मीके) शस्त्रभयं निशि सचिववधाय धनुः एन्द्रम् ॥ ५ ॥
वृष्टिं करोत्यवृष्त्यां वृष्टिं वृष्ट्यां निवारयत्येन्द्र्याम् ।
पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे ॥ ६ ॥
चापं मघोनः कुरुते निशायाम्
आखण्डलायां दिशि भूपपीडाम् ।
याम्यापरोदक्प्रभवं निहन्यात्
सेनापतिं नायकमन्त्रिणौ च ॥ ७ ॥
निशि सुरचापं सितवर्णाद्यं जनयति पीडां द्विजपूर्वाणाम् ।
भवति च यस्यां दिशि तद्देश्यं नरपतिमुख्यं नचिराद् धन्यात् ॥ ८ ॥

---

अध्याय ३६ गन्धर्वनगरलक्षणाध्यायः
उदगादिपुरोहितनृपबलपतियुवराजदोषदं खपुरम् ।
सितरक्तपीतकृष्णं विप्रादीनामभावाय ॥ १ ॥
नागरनृपतिजयावहमुदग्विदिक्स्थं विवर्णनाशाय ।
शान्ताशायां दृष्टं सतोरणं नृपतिविजयाय ॥ २ ॥
सर्वदिगुत्थं सततोथितं च भयदं नरेन्द्रराष्ट्राणाम् ।
चौराटविकान् हन्याद् धूमानलशक्रचापाभम् ॥ ३ ॥
गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम् ।
दीप्ते नरेन्द्रमृत्युः वामेऽरिभयं जयः सव्ये ॥ ४ ॥
अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् ।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग् भूरि रणे वदुन्धरा ॥ ५ ॥

---

अध्याय ३७ प्रतिसूर्यलक्षणाध्यायः
प्रतिसूर्यकः प्रशस्तो दिवसकृदृतुवर्णसप्रभः स्निग्धः ।
वैदूर्यनिभः स्वच्छः शुक्लश्च क्षेमसौभिक्षः ॥ १ ॥

पीतो व्याधिं जनयत्यशोकरूपश्च शस्त्रकोपाय ।
प्रतिसूर्याणां माला दस्युभयातंकनृपहन्त्री ॥ २॥
दिवसकृतः प्रतिसूर्यो जलकृदुरग्दक्षिणे स्थितोऽनिलकृट ।
उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा ॥ ३॥

---

अध्याय ३८-१ रजोलक्षणं
कथयन्ति पार्थिववधं रजसा घनतिमिरसञ्चयनिभेन ।
अविभाव्यमानगिरिपुरतरवः सर्वा दिशश्छन्नाः ॥ १॥
यस्याम् दिशि धूमचयः प्राक् प्रभवति नाशमेति वा यस्याम्
।
आगच्छति सप्ताहात् तत्र एव भयं न सन्देहः ॥ २॥
श्वेते रजोघनौघे पीडा स्यान् मन्त्रिजनपदानां च ।
नचिरात् प्रकोपमुपयाति शस्त्रमतिसङ्कुला सिद्धिः ॥ ३॥
अर्कोदये विजृंभति यदि दिनमेकं दिनद्वयं वापि ।
स्थगयन्न् इव गगनतलं भयमत्युग्रं निवेदयति ॥ ४॥
अनवरतसञ्चयवहं रजनीमेकां प्रधाननृपहन्तृ ।
क्षेमाय च शेषाणां विचक्षणानां नरेन्द्राणाम् ॥ ५॥
रजनीद्वयं विसर्पति यस्मिन् राष्ट्रे रजोघनं बहुलम् ।
परचक्रस्य आगमनं तस्मिन्न् अपि सन्निबोद्धव्यम् ॥ ६॥
निपतति रजनीत्रितयं चतुष्कमपि अन्नरसविनाशाय ।
राज्ञां सैन्यक्षोभो रजसि भवेत् पञ्चरात्रभवे ॥ ७॥
केत्वाद्युदयविमुक्तं यदा रजो भवति तीव्रभयदायि ।
शिशिरादन्यत्रर्तौ फलमविकलमाहु आचार्याः ॥ ८॥

---

अध्याय ३८-२ निर्घातलक्षणाध्यायः
पवनः पवनाभिहतो गगनादवनौ यदा समापतति ।
भवति तदा निर्घातः स च पापो दीप्तविहगरुतः ॥ १॥
अर्कोदयेऽधिकरणिकनृपधनियोधांगनावणिग्वेश्याः ।
आप्रहरांशेऽजाविकमुपहन्यात्शूद्रपौरांश्च ॥ २॥
आमध्याह्नाद् राजोपसेविनो ब्राह्मणांश्च पीडयति ।
वैश्यजलदां तृतीये चौरान् प्रहरे चतुर्थे तु ॥ ३॥
अस्तं याते नीचान् प्रथमे यामे निहन्ति सस्यानि ।
रात्रौ द्वितीययामे पिशाचसंघान् निपीडयति ॥ ४॥
तुरगकरिणः तृतीये विनिहन्याद् यायिनश्चतुर्थे च ।
भैरवजर्जरशब्दो याति यतः तां दिशं हन्ति ॥ ५॥

---

अध्याय ३९ सस्यजातकाध्यायः
वृश्चिकवृषप्रवेशे भानोः ये बादरायणेनोक्ताः ।
ग्रीष्मशरत्सस्यानां सदसद्योगाः कृताः त इमे ॥ १॥
भानोः अलिप्रवेशे केन्द्रैः तस्मात्शुभग्रहाक्रान्तैः ।
बलवद्भिः सौम्यैः वा निरीक्षिते (निरीक्षितैः)
ग्रैष्मिकविवृद्धिः ॥ २॥
अष्टमराशिगतेऽर्के गुरुशशिनोः कुंभसिंहसंस्थितयोः
(स्थितयोः) ।
सिंहघटसंस्थयोः वा निष्पत्तिः ग्रीष्मसस्यस्य ॥ ३॥
अर्कात् सिते द्वितीये बुधेऽथवा युगपदेव वा स्थितयोः ।
व्ययगतयोः अपि तद्वन् निष्पत्तिः अतीव गुरुदृष्ट्या ॥ ४॥
शुभमध्येऽलिनि सूर्याद् गुरुशशिनोः सप्तमे परा संपत् ।
अल्यादिस्थे सवितरि गुरौ द्वितीयेऽर्धनिष्पत्तिः ॥ ५॥
लाभहिबुकार्थयुक्तैः सूर्यादलिगात् सितेन्दुशशिपुत्रैः ।
सस्यस्य परा संपत् कर्मणि जीवे गवां चाग्र्या ॥ ६॥
कुंभे गुरुः गवि शशी सूर्योऽलिमुखे कुजार्कजौ मकरे ।
निष्पत्तिः अस्ति महती पश्चात् परचक्रभयरोगम् ॥ ७॥
मध्ये पापग्रहयोः सूर्यः सस्यं विनाशयत्यलिगः ।
पापः सप्तमराशौ जातं जातं विनाशयति ॥ ८॥
अर्थस्थाने क्रूरः सौम्यैः अनिरीक्षितः प्रथमजातम् ।
सस्यं निहन्ति पश्चादुप्तं निष्पादयेद् व्यक्तम् ॥ ९॥
जामित्रकेन्द्रसंस्थौ क्रूरौ सूर्यस्य वृश्चिकस्थस्य ।
सस्यविपत्तिं कुरुतः सौम्यैः दृष्टौ न सर्वत्र ॥ १०॥
वृश्चिकसंस्थादर्कात् सप्तमषष्ठौपगौ यदा क्रूरौ ।
भवति तदा निष्पत्तिः सस्यानामर्घपरिहानिः ॥ ११॥
विधिनानेनैव रविः वृषप्रवेशे शरत्समुत्थानाम् ।
विज्ञेयः सस्यानां नाशाय शिवाय वा तज्ज्ञैः ॥ १२॥
त्रिषु मेषादिषु सूर्यः सौम्ययुतो वीक्षितोऽपि वा विचरन् ।
ग्रैष्मिक (ग्रष्मिक) धान्यं कुरुते समर्घं (समर्थं)
अभयौपयोग्यं च ॥ १३॥
कार्मुकमृगघटसंस्थः शारदसस्यस्य (शारदस्य) तद्वदेव रविः
।
संग्रहकाले ज्ञेयो विपर्ययः क्रूरदृग्योगात् (यागात्) ॥ १४॥

---

अध्याय ४० द्रव्यनिश्चयाध्यायः
ये येषां द्रव्याणामधिपतयो राशयः समुद्दिष्टाः ।
मुनिभिः शुभाशुभार्थं तान् आगमतः प्रवक्ष्यामि ॥ १॥
वस्त्राविककुतुपानां मसूरगोधूमरालकयवानाम् ।
स्थलसंभवौषधीनां कनकस्य च कीर्तितो मेषः ॥ २॥
गवि वस्त्रकुसुमगोधूमशालियवमहिषसुरभितनयाः स्युः ।
मिथुनेऽपि धान्यशारदवल्लीशालूककर्पासाः ॥ ३॥
कर्किणि कोद्रवकदलीदूर्वाफलकन्दपत्रचोचानि ।
सिंहे तुषधान्यरसाः सिंहादीनां त्वचः सगुडाः ॥ ४॥
षष्ठेऽतसीकलायाः कुलत्थगोधूममुद्गनिष्पावाः ।
सप्तमराशौ माषा यवगोधूमाः ससर्षपाश्चैव (गोधूमाः
सर्षपाः सयवाः) ॥ ५॥
अष्टमराशाविक्षुः सैक्यं लोहानि अजाविकं चापि ।
नवमे तु तुरगलवणांबरास्त्रतिलधान्यमूलानि ॥ ६॥
मकरे तरुगुल्माद्यं सैक्यैक्षुसुवर्णकृष्णलोहानि ।
कुंभे सलिलजफलकुसुमरत्नचित्राणि रूपाणि ॥ ७॥
मीने कपालसंभवरत्नानि अंबूद्भवानि वज्राणि ।
स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजातं च ॥ ८॥
राशेश्चतुर्दशार्थायसप्तनवपंचमस्थितो जीवः ।
द्व्येकादशदशपंचाष्टमेषु शशिजश्च वृद्धिकरः ॥ ९॥
षट्सप्तमगो हानिं वृद्धिं शुक्रः करोति शेषेषु ।
उपचयसंस्थाः क्रूराः शुभदाः शेषेषु हानिकराः ॥ १०॥
राशेः यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः ।
तत्प्रोक्तद्रव्याणां महार्घता दुर्लभत्वं च ॥ ११॥
इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम् ।

तद्द्रव्याणां वृद्धिः सामर्घ्यं वल्लभत्वं च (सामर्थयमदुर्लभत्वं च) ॥ १२ ॥
गोचरपीडायामपि राशिः बलिभिः शुभग्रहैः दृष्टः ।
पीडां न करोति तथा क्रूरैः एवं विपर्यासः ॥ १३ ॥

---

अध्याय ४१ अर्घकाण्डाध्यायः
अतिवृष्ट्युल्कादण्डान् परिवेषग्रहणपरिधिपूर्वांश्च ।
दृष्ट्वा अमावास्यायामुत्पातान् पौणमास्यां (पूर्णमास्यां) च ॥ १ ॥
ब्रूयादर्घविशेषान् प्रतिमासं राशिषु क्रमात् सूर्ये ।
अन्यतिथावुत्पाता ये ते डमरार्तये राज्ञाम् ॥ २ ॥
मेषौपगते सूर्ये ग्रीष्मजधान्यस्य संग्रहं कृत्वा (कुर्यात्) ।
वनमूलफलस्य वृषे चतुर्थमासे तयोः लाभः ॥ ३ ॥
मिथुनस्थे सर्वरसान् धान्यानि च संग्रहं समुपनीय ।
षष्ठे मासे विपुलं विक्रेता (विक्रीणन्) प्राप्नुयाल्लाभम् ॥ ४ ॥
कर्किणि अर्के मधुगन्धतैलघृतफाणितानि विनिधाय ।
द्विगुणा द्वितीयमासे लब्धिः हीनाधिके छेदः ॥ ५ ॥
सिंहे सुवर्णमणिचर्मवर्मशस्त्राणि मौक्तिकं रजतम् ।
पंचममासे लब्धिः विक्रेतुः अतोऽन्यथा छेदः ॥ ६ ॥
कन्यागते दिनकरे चामरखरकरभवाजिनां क्रेता ।
षष्ठे मासे द्विगुणं लाभमवाप्नोति विक्रीणन् ॥ ७ ॥
तौलिनि तान्तवभाण्डं मणिकंबलकाचपीतकुसुमानि ।
आदद्याद् धान्यानि च वर्षार्धाद् (षण्मासाद्) द्विगुणिता वृद्धिः ॥ ८ ॥
वृश्चिकसंस्थे सवितरि फलकन्दकमूलविविधरत्नानि ।
वर्षद्वयमुषितानि द्विगुणं लाभं प्रयच्छन्ति ॥ ९ ॥
चापगते गृह्णीयात् कुंकुम (कुंकम) शंखप्रवालकाचानि ।
मुक्ताफलानि चा ततो वर्षार्धाद् द्विगुणतां यान्ति ॥ १० ॥
मृगघटसंस्थे सवितरि गृह्णीयाल् (मृगधटगे गृह्णीयाद् दिवाकरे) लोहभाण्डधान्यानि ।
स्थित्वा मासं दद्याल्लाभार्थी द्विगुणमाप्नोति ॥ ११ ॥
सवितरि झषमुपयाते मूलफलं कन्दभाण्डरत्नानि ।
संस्थाप्य वत्सरार्धं लाभकमिष्टं समाप्नोति ॥ १२ ॥
राशौ राशौ यस्मिन् शिशिरमयूखः सहस्रकिरणो वा ।
युक्तोऽधिमित्रदृष्टः तत्रायं लाभको दिष्टः ॥ १३ ॥
सवितृसहितः संपूर्णो वा शुभैः युतवीक्षितः
शिशिरकिरणः सद्योऽर्घस्य प्रवृद्धिकरः स्मृतः ।
अशुभसहितः सन्दृष्टो वा हिनस्त्यथवा रविः
प्रतिगृहगतान् भावान् बुद्ध्वा वदेत् सदसत्फलम् ॥ १४ ॥

---

अध्याय ४२ इन्द्रध्वजसंपदः
ब्रह्माणमूचुः अमरा भगवन् शक्ताः स्म नासुरान् समरे ।
प्रतियोधयितुमतः त्वां शरण्यशरणं समुपयाताः ॥ १ ॥
देवान् उवाच भगवान् क्षीरोदे केशवः स वः केतुम् ।
यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः ॥ २ ॥
लब्धवराः क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः ।
श्रीवत्सांकं कौस्तुभमणिकिरनौद्भासितौरस्कम् ॥ ३ ॥
श्रीपतिमचिन्त्यमसमं समं ततः (समन्ततः) सर्वदेहिनां सूक्ष्मम् ।
परमात्मानमनादिं विष्णुमविज्ञातपर्यन्तम् ॥ ४ ॥
तैः संस्तुतः स देवः तुतोष नारायणो ददौ चैषाम् ।
ध्वजमसुरसुरवधूमुखकमलवनतुषारतीक्ष्णांशुम् ॥ ५ ॥
तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति रत्नचित्रे ।
देदीप्यमानं शरदीव सूर्यं ध्वजं समासाद्य मुमोद शक्रः ॥ ६ ॥
स किंकिणीजालपरिष्कृतेन (परिस्कृतेन) स्रक्छत्रघण्टापिटकान्वितेन ।
समुच्छ्रितेनामरराड्ध्वजेन निन्ये विनाशं समरेऽरिसैन्यम् ॥ ७ ॥
उपरिचरस्यामरपो वसोः ददौ चेदिपस्य वेणुमयीम् ।
यष्टिं तां स नरेन्द्रो विधिवत् संपूजयामास ॥ ८ ॥
प्रीतो महेन मघवा (मघवान्) प्राहएवं ये नृपाः करिष्यन्ति ।
वसुवद्वसुमन्तः ते भुवि सिद्धाज्ञा भविष्यन्ति ॥ ९ ॥
मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः ।
ध्वजएव चाभिधास्यति जगति निमित्तैः फलं सदसत् ॥ १० ॥
पूजा तस्य नरेन्द्रैः बलवृद्धिजयार्थिभिः यथा पूर्वम् ।
शक्राज्ञया प्रयुक्ता तामागमतः प्रवक्ष्यामि ॥ ११ ॥
तस्य विधानं शुभकरणदिवसनक्षत्रमंगलमुहूर्तैः ।
प्रास्थानिकैः वनमियाद् दैवज्ञः सूत्रधारश्च ॥ १२ ॥
उद्यानदेवतालयपितृवनवल्मीकमार्गचितिजाताः ।
कुब्ज ऊर्ध्वशुष्ककण्टकिवल्लीवन्दाकयुक्ताश्च ॥ १३ ॥
बहुविहगालयकोटरपवनानलपीडिताश्च ये तरवः ।
ये च स्युः स्त्रीसंज्ञा न ते शुभाः शक्रकेत्वर्थे ॥ १४ ॥
श्रेष्ठोऽर्जुनोऽजकर्णः (अश्वकमः) प्रियकधवौदुंबराश्च पंचैते ।
एतेषामेकतमं (अन्यतमं) प्रशस्तमथवापरं वृक्षम् ॥ १५ ॥
गौरासितक्षितिभवं संपूज्य यथाविधि द्विजः पूर्वम् ।
विजने समेत्य रात्रौ स्पृष्ट्वा ब्रूयादिमं मन्त्रम् ॥ १६ ॥
यानीह वृक्षे भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः ।
उपहारं गृहीत्वा इमं क्रियतां वासपर्ययः ॥ १७ ॥
पार्थिवः त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम ।
ध्वजार्थं देवराजस्य पूजा इयं प्रतिगृह्यताम् ॥ १८ ॥
छिन्द्यात् प्रभातसमये वृक्षमुदक् प्रान् मुखोऽपि वा भूत्वा ।
परशोः जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः ॥ १९ ॥
नृपजयदमविध्वस्तं पतनमनाकुंचितं च पूर्वोदक् ।
अविलग्नं चान्यतरौ विपरीतमतः त्यजेत् पतितम् ॥ २० ॥
छित्त्वाग्रे चतुरंगुलमष्टौ मूले जले क्षिपेद् यष्टिम् ।
उद्धृत्य पुरद्वारं शकटेन नयेन् मनुष्यैः वा ॥ २१ ॥
अरभंगे बलभेदो नेम्या नाशो बलस्य विज्ञेयः ।
अर्थक्षयोऽक्षयभंगे तथाणिभंगे च वर्द्धकिनः ॥ २२ ॥
भाद्रपदशुक्लपक्षस्याष्टम्यां नागरैः वृतो राजा ।
दैवज्ञसचिवकंचुकिविप्रप्रमुखैः सुवेषधरैः ॥ २३ ॥
अहतांबरसंवीतां यष्टिं पौरन्दरीं पुरं पौरैः ।

स्रग्गन्धधूपयुक्तां प्रवेशयेत्शंखतूर्यरवैः ॥ २४ ॥
रुचिरपताकातोरणवनमालालंकृतं प्रहृष्टजनम् ।
सम्मार्जितार्चितपथं सुवेषगणिकाजनाकीर्णम् ॥ २५ ॥
अभ्यर्चितापणगृहं प्रभूतपुण्याहवेदनिर्घोषम् ।
नटनर्तकगेयज्ञैः आकीर्णचतुष्पथं नगरम् ॥ २६ ॥
तत्र पताकाः श्वेता भवन्ति विजयाय (विजयाय भवन्ति) रोगदाः पीताः ।
जयदाश्च चित्ररूपा रक्ताः शस्त्रप्रकोपाय ॥ २७ ॥
यष्टिं प्रवेशयन्तीं निपातयन्तो भयाय नागाद्याः ।
बालानां तलशब्दे संग्रामः सत्त्वयुद्धं वा ॥ २८ ॥
सन्तक्ष्य पुनः तक्षा विधिवद् यष्टिं प्ररोपयेद् यन्त्रे ।
जागरमेकादश्यां नरेश्वरः कारयेगास्याम् ॥ २९ ॥
सितवस्त्रौष्णीषधरः पुरोहितः शाक्रवैष्णवैः मन्त्रैः ।
जुहुयादग्निं सांवत्सरो निमित्तानि गृह्णीयात् ॥ ३० ॥
इष्टद्रव्याकारः सुरभिः स्निग्धो घनोऽनलोऽर्चिष्मान् ।
शुभकृदतोऽन्योऽनिष्टो (नेष्टो) यात्रायां विस्तरोऽभिहितः ॥ ३१ ॥
स्वाहावसानसमये स्वयमुज्ज्वलार्चिः
स्निग्धः प्रदक्षिणशिखो हुतभुग् नृपस्य ।
गंगादिवाकरसुताजलचारुहारां
धात्रीं समुद्ररशनां (समुद्ररसनां) वशगां करोति ॥ ३२ ॥
चामीकराशोककुरण्टकाब्ज
वैदूर्यनीलोत्पलसन्निभेऽग्नौ ।
न ध्वान्तमन्तर्भवनेऽवकाशं
करोति रत्नांशुहतं नृपस्य ॥ ३३ ॥
येषां रथौघार्णवमेघदन्तिनां
समस्वनोऽग्निः यदि वापि दुन्दुभेः ।
तेषां मदान्धैभघटावघट्टिता
भवन्ति याने तिमिरोपमा दिशः ॥ ३४ ॥
ध्वजकुंभहयैभभूभृतामनुरूपे वशमेति भूभृताम् ।
उदयास्तधराधराऽधरा हिमवद्विन्ध्यपयोधरा धरा ॥ ३५ ॥
द्विरदमदमहीसरोजलाजा (जलाजैः) घृतमधुना च हुताशने सगन्धे ।
प्रणतनृपशिरोमणिप्रभाभिः भवति पुरस्छुरितेव भूः नृपस्य ॥ ३६ ॥
उक्तं यदुत्तिष्ठति शक्रकेतौ शुभाशुभं सप्तमरीचिरूपैः ।
तज्जन्मयज्ञग्रहशान्तियात्राविवाहकालेष्वपि चिन्तनीयम् ॥ ३७ ॥
गुडपूपपायसाद्यैः विप्रान् अभ्यर्च्य दक्षिणाभिश्च ।
श्रवणेन द्वादश्यामुत्थाप्योऽन्यत्र वा श्रवणात् ॥ ३८ ॥
शक्रकुमार्यः कार्याः प्राह मनुः सप्त पंच वा तज्ज्ञैः ।
नन्दौपनन्दसंज्ञे पादोनार्धे ध्वजोच्छ्रायात् (पादेनार्धेन चोच्छ्रायात्) ॥ ३९ ॥
षोडशभागाभ्यधिके जयविजये द्वे वसुन्धरे चान्ये ।
अधिका शक्रजनित्री मध्येऽष्टांशेन चैतासाम् ॥ ४० ॥
प्रीतैः कृतानि विबुधैः यानि पुरा भूषणानि सुरकेतोः ।
तानि क्रमेण दद्यात् पिटकानि विचित्ररूपाणि ॥ ४१ ॥
रक्ताशोकनिकाशं चतुरस्रं (चतुरश्रं) विश्वकर्मणा प्रथमम् ।
रशना (रसना) स्वयंभुवा शंकरेण चानेकवर्णगा दत्ता (चानेकवर्णधरी) ॥ ४२ ॥
अष्टाश्रि नीलरक्तं तृतीयमिन्द्रेण भूषणं दत्तम् ।
असितं यमश्चतुर्थं मसूरकं कान्तिमदयच्छत् ॥ ४३ ॥
मञ्जिष्ठाभं वरुणः षडश्रि तत्पंचमं जलोर्मिनिभम् ।
मयूरं केयूरं षष्ठं वायुः जलदनीलम् ॥ ४४ ॥
स्कन्धः स्वं केयूरं सप्तममददद् ध्वजाय बहुचित्रम् ।
अष्टममनलज्वालासंकाशं हव्यभुग्वृत्तं (दत्तं) ॥ ४५ ॥
वैदूर्यसदृशमिन्द्रो (इन्दुः) नवमं ग्रैवेयकं ददावन्यत् ।
रथचक्राभं दशमं सूर्यः त्वष्टा प्रभायुक्तम् ॥ ४६ ॥
एकादशमुद्रंशं विश्वेदेवाः सरोजसंकाशम् ।
द्वादशमपि च निवेशम् ऋषयो (निवंशं मुनयो) नीलोत्पलाभासम् ॥ ४७ ॥
किंचिदधऊर्ध्वनिर्मितं (निर्नतं) उपरि विशालं त्रयोदशं केतोः ।
शिरसि बृहस्पतिशुक्रौ लाक्षारससन्निभं ददतुः ॥ ४८ ॥
यदि यद् येन विभूषणं (विनिर्मितं) अमरेण विनिर्मितंविभूषणं) ध्वजस्यार्थे ।
तत्तत् तद्दैवत्यं विज्ञातव्यं विपश्चिद्भिः ॥ ४९ ॥
ध्वजपरिमाणत्र्यंशः परिधिः प्रथमस्य भवति पिटकस्य ।
परतः प्रथमात् प्रथमादष्टांशाष्टांशहीनानि ॥ ५० ॥
कुर्यादहनि चतुर्थे पूरणमिन्द्रध्वजस्य शास्त्रज्ञः ।
मनुना चागमगीतान् मन्त्रान् एतान् पठेन् नियतः ॥ ५१ ॥
हरार्कवैवस्वतशक्रसोमैः धनेशवैश्वानरपाशभृद्भिः ।
महर्षिसंघैः सदिगप्सरोभिः शुक्रांगिरःस्कन्दमरुद्गणैश्च ॥ ५२ ॥
यथा त्वमूर्जस्करणैकरूपैः समर्चितः त्वाभरणैरुदारैः ।
तथेह तानि आभरणानि यागे (देव) शुभानि संप्रीतमना गृहाण ॥ ५३ ॥
अजोऽव्ययः शाश्वत एकरूपो विष्णुः वराहः पुरुषः पुराणः ।
त्वमन्तकः सर्वहरः कृशानुः सहस्रशीर्षः (शीर्षा) शतमन्युः ईड्यः ॥ ५४ ॥
कविं सप्तजिह्वं त्रातारमिन्द्रं स्ववितारं (अवितारं) सुरेशम् ।
ह्वयामि शक्रं वृत्रहणं सुषेणमस्माकं वीरा उत्तरा (उत्तरे) भवन्तु ॥ ५५ ॥
प्रपूरणे चोच्छ्रयणे प्रवेशे स्नाने तथा माल्यविधौ विसर्गे ।
पठेदिमान् नृपतिः सोपवासो मन्त्रान् शुभान् पुरुहूतस्य केतोः ॥ ५६ ॥
क्षत्रध्वजादर्शफलार्धचन्द्रैः विचित्रमालाकदलीक्षुदण्डैः ।
सव्यालसिंहैः पिटकैः गवाक्षैः अलंकृतं दिक्षु च लोकपालैः ॥ ५७ ॥
अच्छिन्नरज्जुं दृढकाष्ठमातृकं

सुश्लिष्टयन्त्रार्गलपादतोरणम् ।
उत्थापयेल्लक्ष्म सहस्रचक्षुषः
सारद्रुमाभग्नकुमारिकान्वितम् ॥५८॥
अविरतजनरावं मंगलाशीःप्रणामैः ।
पटुपटहमृदंगैः शंखभेर्यादिभिश्च ।
श्रुतिविहितवचोभिः पापठद्भिश्च विप्रैः
अशुभविहत (रहित) शब्दं केतुमुत्थापयेच् (उत्थापयीत) च ॥५९॥
फलदधिघृतलाजाक्षौद्रपुष्पाग्रहस्तैः
प्रणिपतितशिरोभिः तुष्ट (तुष्टु) वद्भिश्च पौरैः ।
वृत (धृत) मनिमिषभर्तुः केतुमीशः प्रजानाम्
मरिनगरनताग्रं कारयेद् द्विड्बधाय (वधाय) ॥६०॥
नातिद्रुतं न च विलंबितमप्रकंपम्
अध्वस्तमाल्यपिटकादिविभूषणम् च ।
उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात्
तच्छान्तिभिः नरपतेः शमयेत् पुरोधाः ॥६१॥
क्रव्यादकौशिककपोतककाककंकैः
केतुस्थितैः महदुशन्ति भयं नृपस्य ।
चाषेण चापि युवराजभयं वदन्ति
श्येनो विलोचनभयं निपतन् करोति ॥६२॥
छत्रभंगपतने नृपमृत्युः
तस्करान् मधु करोति निलीनम् ।
हन्ति चाप्यथ पुरोहितमुल्का
पार्थिवस्य महिषीमशनिश्च ॥६३॥
राज्ञीविनाशं पतिता पताका
करोत्यवृष्टिं पिटकस्य पातः ।
मध्याग्रमूलेषु च केतुभंगो
निहन्ति मन्त्रिक्षितिपालपौरान् ॥६४॥
धूमावृते शिखिभयं तमसा च मोहो
व्यालैश्च भग्नपतितैः न भवत्यमात्याः ।
ग्लायन्त्युदक्प्रभृति च क्रमशो द्विजाद्यान् (द्विजाद्या)
भंगे तु बन्धकिबधः (वधः) कथितः कुमार्याः ॥६५॥
रज्जूत्संगच्छेदने बालपीडा
राज्ञो मातुः पीडनं मातृकायाः ।
यद्यत् कुर्युश्चारणा बालका (बालकाश्चारणा) वा
तत्तत् तादृग् भावि पापं शुभं वा ॥६६॥
दिनचतुष्टयमुत्थितमर्चितं
समभिपूज्य नृपोऽहनि पंचमे ।
प्रकृतिभिः सह लक्ष्म विसर्जयेद्
बलभिदः स्वबलाभिविवृद्धये ॥६७॥
उपरिचरवसुप्रवर्तितं नृपतिभिः अपि अनुसन्ततं कृतम् ।
विधिमिमिमनुमन्य पार्थिवो न रिपुकृतं भयमाप्नुयादिति ॥६८॥

---

## अध्याय ४३ नीराजनाध्यायः

भगवति जलधरपक्ष्मक्षपाकरार्केक्षणे कमलनाभे ।
उन्मीलयति तुरंग (तुरंगन) करिनरनीराजनं कुर्यात् ॥१॥
द्वादश्यामष्टम्यां कार्तिक (कार्त्तिक) शुक्लस्य पंचदश्यां वा ।
आश्वयुजे वा कुर्यान् नीराजनसंज्ञितां शान्तिम् ॥२॥
नगरोत्तरपूर्वदिशि प्रशस्तभूमौ प्रशस्तदारुमयम् ।
षोडशहस्तोच्छ्रायं दशविपुलं तोरणं कार्यम् ॥३॥
सर्जौदुंबरककुभशाखामय (शाखाककुभमयं) शान्तिसद्म कुशबहुलम् ।
वंशविनिर्मितमत्स्यध्वजचक्रालंकृतद्वारम् ॥४॥
प्रतिसरया तुरगाणां भल्लातकशालिकुष्ठसिद्धार्थान् ।
कण्ठेषु निबध्नीयात् पुष्ट्यर्थं शान्तिगृहगाणाम् ॥५॥
रविवरुणविश्वदेवप्रजेशपुरुहूतवैष्णवैः मन्त्रैः ।
सप्ताहं शान्तिगृहे कुर्यात्शान्तिं तुरंगाणाम् ॥६॥
अभ्यर्चिता न परुषं वक्तव्या नापि ताडनीयाः ते ।
पुण्याहशंखतूर्यध्वनिगीतरवैः विमुक्तभयाः ॥७॥
प्राप्ते अष्टमेऽह्नि कुर्यादुदन्मुखं तोरणस्य दक्षिणतः ।
कुशचीरावृतमाश्रममग्निं पुरतोऽस्य वेद्यां च ॥८॥
चन्दनकुष्ठसमंगाहरितालमनःशिलाप्रियंगुवचाः ।
दन्त्यमृताञ्जनरजनीसुवर्णपुष्प्यग्निपुष्पाग्नि) मन्थाश्च ॥९॥
श्वेतां सपूर्णकोशां कटंभरात्रायमाणसहदेवीः ।
नागकुसुमं स्वगुप्तां शतावरीं सोमराजीं च ॥१०॥
कलशेष्वेताः (एतान्) कृत्वा संभारान् उपहरेद् वलिं (बलिं) सम्यक् ॥११॥
भक्ष्यैः नानाकारैः मधुपायसयावकप्रचुरैः ॥१२॥
खदिरपलाशौदुंबरकाश्मर्यश्वत्थनिर्मिताः समिधः ।
स्रुक् कनकाद् रजताद् वा कर्तव्या भूतिकामेन ॥१३॥
पूर्वाभिमुखः श्रीमान् वैयाघ्रे चर्मणि स्थितो राजा ।
तिष्ठेदनलसमीपे तुरगभिषग्दैववित्सहितः ॥१४॥
यात्रायां यदभिहितं ग्रहयज्ञविधौ महेन्द्रकेतौ च ।
वेदीपुरोहितानललक्षणमस्मिं तदवधार्यम् ॥१५॥
लक्षणयुक्तं तुरगं द्विरदवरं चैव दीक्षितं स्नातम् ।
अहतसितांबरगन्धस्रग्धूम (धूपा)अभ्यर्चितं कृत्वा ।
आश्रमतोरणमूलं समुपनयेत् सान्त्वयन् शनैः वाचा ।
वादित्रशंखपुण्याहनिःस्वनापूरितदिगन्तम् ॥१६॥
यद्यानीतः तिष्ठेद् दक्षिणचरणं हयः समुत्क्षिप्य ।
स जयति तदा नरेन्द्रः शत्रून् नचिराद् (अचिराद्) विना यत्नात् ॥१७॥
त्रस्यन् नैष्टो राज्ञः परिशेषं चेष्टितं द्विपहयानाम् ।
यात्रायां व्याख्यातं तदिह विचिन्त्यं यथायुक्ति ॥१८॥
पिण्डमभिमन्त्र्य दद्यात् पुरोहितो वाजिने स यदि जिघ्रेत् ।
अश्नीयाद् वा जयकृद् विपरीतोऽतोऽन्यथाभिहितः ॥१९॥
कलशौदकेषु शाखामाप्लाव्यौदुंबरीं स्पृशेत् तुरगान् ।
शान्तिकपौष्टिकमन्त्रैः एवं सेनां सनृपनागाम् ॥२०॥
शान्तिं राष्ट्रविवृद्ध्यै कृत्वा भूयोऽभिचारकैः मन्त्रैः ।
मृत्मयमरिं विभिन्द्यात्शूलेनोरःस्थले विप्रः ॥२१॥
खलिनं हयाय दद्यादभिमन्त्र्य पुरोहितः ततो राजा ।
आरुह्यौदक्पूर्वां यायान् नीराजितः सबलः ॥२२॥
मृदंगशंखध्वनिहृष्टकुञ्जरस्रवन्मदामोदसुगन्धमारुतः ।

शिरोमणिप्रान्त (व्रात) चलत् प्रभाचयैः ज्वलन् विविस्वान् इव तोयदात्यये ॥ २३॥
हंसपंक्तिभिः इतः ततोऽद्रिराट संपतद्भिः इव शुक्लचामरैः ॥ २४॥
मृष्टगन्धपवनानुवाहिभिः धूयमानरुचिरस्रगंबरः ।
नैकवर्णमणिवज्रभूषितैः भूषितो मुकुटकुण्डलांगदैः ।
भूरिरत्नकिरणानुरञ्जितः शक्रकार्मुकरुचिं (रुचं) समुद्वहन् ॥ २५॥
उत्पतद्भिः इव खं तुरंगमैः दारयद्भिः इव दन्तिभिः धराम् ।
निर्जितारिभिः इवामरैः नरैः शक्रवत् परिवृतो व्रजेन् नृपः ॥ २६॥
सवज्रमुक्ताफलभूषणोऽथवा सितस्रगुष्णीषविलेपनांबरः ।
धृतातपत्रो गजपृष्ठमाश्रितो घनोपरीवेन्दुतले भृगोः सुतः ॥ २७॥
संप्रहृष्टनरवाजिकुञ्जरं निर्मलप्रहरणांशुभासुरम् ।
निर्विकारमरिपक्षभीषणं यस्य सैन्यमचिरात् स गां जयेत् ॥ २८॥

---

अध्याय ४४ खञ्जनकलक्षणाध्यायः
खञ्जनको नामायं यो विहगः तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि ॥ १॥
स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः ।
आकण्ठमुखात् कृष्णः संपूर्णः पूरयत्याशाम् ॥ २॥
कृष्णो गलेऽस्य बिन्दुः सितकरटान्तः स रिक्तकृद् रिक्तः ।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥ ३॥
अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्ध्नि प्रासादौद्यानहर्म्येषु ॥ ४॥
गोगोष्ठसत्समागमयज्ञौत्सवपार्थिवद्विजसमीपे ।
हस्तितुरंगमशालाघत्रध्वजचामराद्येषु ॥ ५॥
हेमसमीपसितांबरकमलोत्पलपूजितौपलिप्तेषु ।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥ ६॥
पंके स्वाद्वन्नाप्तिः गोरससंपग गोमयोपगते ।
शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः ॥ ७॥
गृहपटलेऽर्थभ्रंशो बध्रे (वध्रे) बन्धोऽशुचौ भवति रोगः ।
पृष्ठे त्वजाविकानां प्रियसंगममावहत्याशु ॥ ८॥
महिषौष्ट्रगर्दभास्थिश्मशानगृहकोणशर्कराट्ट (अद्रि) स्थः ।
प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः ॥ ९॥
पक्षौ धुन्वन् न शुभः शुभः पिबन् वारि निम्नगासंस्थः ।
सूर्योदये प्रशस्तो (ऽथ शस्तो) नैष्टफलः खञ्जनोऽस्तमये ॥ १०॥
नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत् तया गतस्य क्षिप्रमरातिः वशमुपैति ॥ ११॥
तस्मिन् निधिः भवति मैथुनमेति यस्मिन्
यस्मिं तु छर्दयति तत्र तलेऽस्ति काचम् ।
अंगारमपि उपदिशन्ति पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद् धरित्रीम् ॥ १२॥
मृतविकलविभिन्नरोगितः स्वतनुसमानफलप्रदः खगः ।
धनकृदभिनिलीयमानको वियति च बन्धुसमागमप्रदः ॥ १३॥
नृपतिः अपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दिं (अभिनन्दितं) एवमेति वृद्धिम् ॥ १४॥
अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः ।
न नृपतिः अशुभं समाप्नुयात् (समाप्नुयान्) न यदि दिनानि च सप्त मांसभुक् ॥ १५॥
आवर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषात् (दिनशेषे) ।
दिक्स्थानमूर्तिलग्नऋक्षशान्तदीप्तादिभिश्चौह्यम् ॥ १६॥

---

अध्याय ४५ उत्पाताध्यायः
यान् अत्रेः (अत्रि) उत्पातान् गर्गः प्रोवाच तान् अहं वक्ष्ये ।
तेषां संक्षेपोऽयं प्रकृतेः अन्यत्वमुत्पातः ॥ १॥
अपचारेण नराणामुपसर्गः पापसंचयाद् भवति ।
संसूचयन्ति दिव्यान्तरिक्षभौमाः त उत्पाताः (तदुत्पाताः) ॥ २॥
मनुजानामपचारादपरक्ता देवताः सृजन्त्येतान् ।
तत्प्रतिघाताय नृपः शांस्तिं राष्ट्रे प्रयुञ्जीत ॥ ३॥
दिव्यं ग्रहऋक्षवैकृतमुल्कानिर्घातपवनपरिवेषाः ।
गन्धर्वपुरपुरन्दरचापादि यदान्तरिक्षं तत् ॥ ४॥
भौमं चरस्थिरभवं तत्शान्तिभिः आहतं शममुपैति ।
नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके ॥ ५॥
दिव्यमपि शममुपैति प्रभूतकनकान्नगोमहीदानैः ।
रुद्रायतने भूमौ गोदोहात् कोटिहोमाग ॥ ६॥
आत्मसुतकोशवाहनपुरदारपुरोहितेषु लोके च (लोकेषु) ।
पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः ॥ ७॥
अनिमित्तभंगचलनस्वेदाश्रुनिपातजल्पनाद्यानि ।
लिंगार्चायतनानां नाशाय नरेशदेशानाम् ॥ ८॥
दैवतयात्राशकटाक्षचक्रयुगकेतुभंगपतनानि ।
संपर्यासनसादनसंगः (संगाः) च न देशनृपशुभदाः ॥ ९॥
ऋषिधर्मपितृब्रह्मप्रोद्भूतं वैकृतं द्विजातीनाम् ।
यद् रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥ १०॥
गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजं च लोकानाम् ।
स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम् ॥ ११॥
वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे ।
धातरि सविश्वकर्मणि लोकाभावाय निर्दिष्टम् ॥ १२॥
देवकुमारकुमारीवनिताप्रेष्येषु वैकृतं यत् स्यात् ।
तन् नरपतेः कुमारककुमारिकास्त्रीपरिजनानाम् ॥ १३॥
रक्षः पिशाचगृह्यकनागानामेवं (एतद्) एव निर्दिष्टं (निर्देश्यं) ।
मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः ॥ १४॥
बुद्ध्वा देवविकारं शुचिः पुरोधाः त्र्यहौषितः स्नातः ।
स्नानकुसुमानुलेपनवस्त्रैः अभ्यर्चयेत् प्रतिमाम् ॥ १५॥

मधुपर्केण पुरोधा भक्ष्यैः (बक्षैः) बलिभिश्च विधिवदुपतिष्ठेत् ।
स्थालीपाकं जुहुयाद् विधिवन् मन्त्रैश्च तल्लिंगैः ॥ १६ ॥
इति विबुधविकारे शान्तयः सप्तरात्रं
द्विजविबुधगणार्चा गीतनृत्यौत्सवाश्च ।
विधिवदवनिपालैः यैः प्रयुक्ता न तेषां
भवति दुरितपाको दक्षिणाभिश्च रुद्धः ॥ १७ ॥
राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान् ।
मनुजेश्वरस्य पीडा तस्य च राष्ट्रस्य विज्ञेया ॥ १८ ॥
जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः ।
सैन्यग्रामपुरेषु च नाशो वह्नेः भयं कुरुते ॥ १९ ॥
प्रासादभवनतोरणकेत्वादिष्वननलेन दिग्धेषु ।
तडिता वा षण्मासात् परचक्रस्यागमो नियमात् ॥ २० ॥
धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निजं महाभयदम् ।
व्यभ्रे निश्युडुनाशो दर्शनमपि चाह्नि दोषकरम् ॥ २१ ॥
नगरचतुष्पादन्ड (दान्ड) जमनुजानां भयकरं ज्वलनमाहुः ।
धूमाग्निविस्फुलिंगैः शय्यांबरकेशगैः मृत्युः ॥ २२ ॥
आयुधज्वलनसर्पणस्वनाः क्षनिर्गमनवेपनानि वा ।
वैकृतानि यदि वायुधेऽपराणि आशु रौद्ररणसंकुलं वदेत् ॥ २३ ॥
मन्त्रैः आग्नेयैः (वाह्नैः) क्षीरवृक्षात् समिद्भिः
होतव्योऽग्निः सर्षपैः सर्पिषा च ।
अग्न्यादीनां वैकृते शान्तिः एवं
देयं चास्मिन् कांचनं ब्राह्मणेभ्यः ॥ २४ ॥
शाखाभंगेऽकस्माद् वृक्षाणां निर्दिशेद् रणोद्योगम् ।
हसन देशभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥ २५ ॥
राष्ट्रविभेदः त्वनृतौ बालवधोऽतीव कुसुमिते बाले ।
वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति ॥ २६ ॥
मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः ।
स्नेहे दुर्भिक्षभयं महद्भयं निःस्रुते (निःसृते) सलिले ॥ २७ ॥
शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानाम् ।
पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ २८ ॥
पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्दिष्टम् ।
धूमः तस्मिन् ज्वालाऽथवा भवेन् नृपवधायैव ॥ २९ ॥
सर्पत्सु तरुषु जल्पत्सु वापि जनसंक्षयो विनिर्दिष्टः ।
वृक्षाणां वैकृत्ये दशभिः मासैः फलविपाकः ॥ ३० ॥
स्रग्गन्धधूपांबरपूजितस्य छत्रं विधायोपरि पादपस्य ।
कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षड एव
होमाः (षडंगहोमः) ॥ ३१ ॥
पायसेन मधुनापि (मधुना च) भोजयेद् ब्राह्मणान् घृतयुतेन भूपतिः ।
मेदिनी निगदितात्र दक्षिणा वैकृते तरुकृते हितार्थिभिः ॥ ३२ ॥
नालेऽब्जयवादीनामेकस्मिन् द्वित्रिसंभवो मरणम् ।
कथयति तदधिपतीनां यमलं जातं च कुसुमफलम् ॥ ३३ ॥
अतिवृद्धिः सस्यानां नानाफलकुसुमसंभवो (भवो) वृक्षे ।
भवति हि यद्येकस्मिन् परचक्रस्यागम्मो नियमात् ॥ ३४ ॥
अर्धेन यदा तैलं भवति तिलानामतैलता वा स्यात् ।
अन्नस्य च वैरस्यं तदा तु विन्द्याद् भयं सुमहत् ॥ ३५ ॥
विकृतकुसुमं फलम् वा ग्रामादथवा पुराद् वहिः कार्यम् ।
सौम्योऽत्र चरुः कार्यो निर्वाप्यो वा पशुः शान्त्यै ॥ ३६ ॥
सस्ये च दृष्ट्वा विकृतिं प्रदेयं
तत्क्षेत्रमेव प्रथमं द्विजेभ्यः ।
तस्यैव मध्ये चरुमत्र भौमं
कृवा न दोषं समुपैति तज्जं (तज्जान्) ॥ ३७ ॥
दुर्भिक्षमनावृष्टावतिवृष्टौ (अनावृष्ट्यामतिवृष्ट्यां)
क्षुद्भयं परभयं च (सपरचक्रं) ।
रोगो ह्यनृतुभवायां नृपतिवधो (नृपवधो) ऽनभ्रजातायाम् ॥ ३८ ॥
शीतोष्णविपर्यासो (विपर्यासे) नो सम्यगृतुषु च संप्रवृत्तेषु ।
षण्मासाद् राष्ट्रभयं रोगभयं दैवजनितं च ॥ ३९ ॥
अन्यऋतौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम् ।
रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिः मरकः ॥ ४० ॥
धान्यहिरण्यत्वक्फलकुसुमाद्यैः वर्षितैः भयं विन्द्यात् ।
अंगारपांशुवर्षे विनाशमायाति तन्नगरम् ॥ ४१ ॥
उपला विना जलधरैः विकृता वा प्राणिनो यदा वृष्टाः ।
छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसंजननम् ॥ ४२ ॥
क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णवारिणां (वारिणो) वर्षे ।
देशविनाशो ज्ञेयोऽसृग्वर्षे च अपि नृपयुद्धम ॥ ४३ ॥
यद्यमलेऽर्के छाया न दृश्यते प्रतीपा वा ।
देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम् ॥ ४४ ॥
व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथवा रात्रौ ।
प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत् ॥ ४५ ॥
सूर्येन्दुपर्जन्यसमीरणानां यागः (योगः) स्मृतो
वृष्टिविकारकाले ।
धान्यान्नगोकांचनदक्षिणाश्च देयाः ततः शान्तिमुपैति पापम् ॥ ४६ ॥
अपसर्पणं नदीनाम् नगरादचिरेण शून्यतां कुरुते ।
शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम् ॥ ४७ ॥
स्नेहासृग्मांसवहाः संकुलकलुषाः प्रतीपगाश्चापि ।
परचक्रस्यागमनं नद्यः कथयन्ति षण्मासात् ॥ ४८ ॥
ज्वालाधूमक्वाथारुदितौत्क्रुष्टानि चैव कूपानाम् ।
गीतप्रजल्पितानि च जनमरकायौपदिष्टानि (प्रदिष्टानि) ॥ ४९ ॥
सलिल (तोय) उत्पत्तिः अखाते गन्धरसविपर्यये च
तोयानाम् ।
सलिलाशयविकृतौ वा महद्भयं तत्र शन्तिमिमां (इयं) ॥ ५० ॥
सलिलविकारे कुर्यात् पूजां वरुणस्य वारुणैः मन्त्रैः ।
तैः एव च जपहोमं शममेवं पापमुपयाति ॥ ५१ ॥
प्रसवविकारे स्त्रीणां द्वित्रिचतुष्प्रभृतिसंप्रसूतौ वा ।
हीनातिरिक्तकाले च देशकुलसंक्षयो भवति ॥ ५२ ॥

वडवा उष्ट्रमहिषगोहस्तिनीषु यमलौद्भवे रणमरणं (मरणं) एषाम् ।
षण्मासात् सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ ॥ ५३॥
नार्यः परस्य विषये त्यक्तव्याः ता हितार्थिना ।
तर्पयेग द्विजान् कामैः शान्तिं चैवात्र कारयेत् ॥ ५४॥
चतुष्पादाः स्वयूथेभ्यः त्यक्तव्याः परभूमिषु ।
नगरं स्वामिनं यूथमन्यथा तु विनाशयेत् ॥ ५५॥
परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् ।
उक्षाणो वान्योन्यं पिबति श्वा वा सुरभिपुत्रम् ॥ ५६॥
मासत्रयेण विन्द्यात् तस्मिन् निःसंशयं परागमनम् ।
तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ ॥ ५७॥
त्यागो विवासनं दानं तत्तस्याशु शुभं भवेत् ।
तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥ ५८॥
स्थालीपाकेन धातारं पशुना च पुरोहितः ।
प्राजापत्येन मन्त्रेण यजेद् बह्वन्नदक्षिणम् ॥ ५९॥
यानं वाहवियुक्तं यदि गच्छेन् न व्रजेग वाहयुतम् ।
राष्ट्रभयं भवति तदा चक्राणां सादभंगे च ॥ ६०॥
गीतरवतूर्यशब्दा नभसि यदा वा चरस्थिरान्यत्वम् ।
मृत्युः तदा गदा वा विस्वतूर्ये (विस्वरतार्ये) पराभिभवः ॥ ६१॥
अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात् ।
व्युत्पत्तौ वा तेषां परागमो नृपतिमरणं वा ॥ ६२॥
गोलांगलयोः संगे दर्वीशूर्पाद्युपस्करविकारे ।
क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् ॥ ६३॥
वायव्येष्वेषु नृपतिः वायुं शक्तुभिः अर्चयेत् ।
आवायोः इति पंचर्चो जप्तव्याः (जाप्याश्च) प्रयतैः द्विजैः ॥ ६४॥
ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत् ।
बह्वन्नदक्षिणा होमाः कर्तव्याश्च प्रयत्नतः ॥ ६५॥
पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम् ।
नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि ॥ ६६॥
सन्ध्याद्वयेऽपि मण्डलमाबध्नन्तो मृगा विहंगा वा ।
दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः ॥ ६७॥
श्येनाः (श्वानः) प्ररुदन्त इव द्वारे क्रोशन्ति जंबुका दीप्ताः ।
प्रविशेन् नरेन्द्रभवने कपोतकः कौशिको यदि वा ॥ ६८॥
कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः ।
प्रतिलोममण्डलचराः श्येनाद्याश्चांबरे भयदाः ॥ ६९॥
गृहचैत्यतोरणेषु द्वारेषु च पक्षिसंघसंपातः (संपाताः) ।
मधुवल्मीकांभोरुहसमुद्भवः (समुद्भवाः) चापि नाशाय ॥ ७०॥
श्वभिः अस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय ।
पशुशस्त्रव्याहारे नृपमृत्युः मुनिवचश्चेदम् ॥ ७१॥
मृगपक्षिविकारेषु कुर्याद् धीमान् (धोमान्) सदक्षिणान् ।
देवाः कपोत इति च जप्तव्याः पंचभिः द्विजैः ॥ ७२॥
सुदेवा इति चैकेन देया गावः सदक्षिणाः (च दक्षिणा) ।
जपेत्शाकुनसूक्तं वा मनो वेदशिरांशि च ॥ ७३॥
शक्रध्वजेन्द्रकीलस्तंभद्वारप्रपातभंगेषु ।
तद्वत् कपाटतोरणकेतूनां नरपतेः मरणम् ॥ ७४॥
सन्ध्याद्वयस्य दीप्तिः धूमौत्पत्तिश्च काननेऽनग्नौ ।
छिद्राभावे भूमेः दरणं कंपश्च भयकारी ॥ ७५॥
पाखण्डाणां (पाषण्डाणां) नास्तिकानां च भक्तः
साध्वाचारप्रोज्झितः क्रोधशीलः ।
ईर्ष्युः क्रूरो विग्रहासक्तचेता
यस्मिन् राजा तस्य देशस्य नाशः ॥ ७६॥
प्रहर हर छिन्धि भिन्धीत्यायुधकाष्ठाश्मपाणयो बालाः ।
निगदन्तः प्रहरन्ते तत्रापि भयं भवत्याशु ॥ ७७॥
अंगारगैरिकाद्यैः विकृतप्रेताभिलेखनं यस्मिन् ।
नायकचित्रितमथवा क्षये क्षयं याति न चिरेण ॥ ७८॥
लूतापटांगशबलं न सन्ध्ययोः पूजितं कलहयुक्तम् ।
नित्यौच्छिष्टस्त्रीकं च यद्गृहं तत्क्षयं याति ॥ ७९॥
दृष्टेषु यातुधानेषु निर्दिशेन् मरकमाशु संप्राप्तम् ।
प्रतिघातायैतेषां गर्गः शान्तिं चकारैमाम् ॥ ८०॥
महाशान्त्योऽथ बलयो भोज्यानि सुमहान्ति च ।
कारयेत महेन्द्रं च माहेन्द्रीं (महेन्द्रीभिः) च समर्चयेत् ॥ ८१॥
नरपतिदेशविनाशे केतोरुदयेऽथवा ग्रहेऽर्केन्द्वोः ।
उत्पातानां प्रभवः स्वकृतुभवश्चाप्यदोषाय ॥ ८२॥
ये च न दोषान् जनयन्त्युत्पाताः तान् ऋतुस्वभावकृतान् ।
ऋषिपुत्रकृतैः श्लोकैः विद्यादेतैः समासौक्तैः ॥ ८३॥
वज्राशनिमहीकंपसन्ध्यानिर्घातनिःस्वनाः ।
परिवेषरजोधूमरक्तार्कास्तमय (अस्तमन) उदयाः ॥ ८४॥
द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलौद्गमाः ।
गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ ८५॥
तारा उल्कापातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनस्फोटधूमरेण्वनिलाहतम् ॥ ८६॥
रक्तपद्मारुणा (अरुणं) सन्ध्या (सन्ध्यं) नभः
क्षुब्धार्णवौपमम् ।
सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ ८७॥
शक्रायुधपरीवेषविद्युत्शुष्कविरोहणम् ।
कंपौद्वर्तनवैकृत्यं रसनं दरणं क्षितेः ॥ ८८॥
सरोनद्युदपानानां वृद्ध्यूर्ध्वतरणप्लवाः ।
सरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥ ८९॥
दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनं च दिवाऽंबरे ॥ ९०॥
गीतवादित्रनिर्घोषा वनपर्वतसानुषु ।
सस्यवृद्धिः अपां हानिः अपापाः शरदि स्मृताः ॥ ९१॥
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्त्वानां दर्शनं वाग् अमनुषी ॥ ९२॥
दिशो धूमान्धकाराश्च सनभोवनपर्वताः ।
उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥ ९३॥
हिमपातानिलोत्पाता विरूपाद्भुतदर्शनम् ।

कृष्णाञ्जनाभमाकाशं तारा उल्कापातपिञ्जरम् ॥ ९४॥
चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु ।
पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥ ९५॥
ऋतुस्वभावजा ह्येते दृष्टाः स्वऋतौ शुभप्रदाः ।
ऋतोः अन्यत्र चौत्पाता दृष्टाः ते चातिदारुणाः
(बृशदारुनाः) ॥ ९६॥
उन्मत्तानां च या गाथाः शिशूनां यग भाषितं (भाषितं च यत्) ।
स्त्रियो यग प्रभाषन्ते तस्य नास्ति व्यतिक्रमः ॥ ९७॥
पूर्वं चरति देवेषु पश्चागरति (गच्छति) मानुषान् ।
नाचोदिता वाग् वदति सत्या ह्येषा सरस्वती ॥ ९८॥
उत्पातान् गणितविवर्जितोऽपि बुद्धवा
विख्यातो भवति नरेन्द्रवल्लभश्च ।
एतत् तन्मुनिवचनं रहस्यमुक्तं
यज्ज्ञात्वा भवति नरः त्रिकालदर्शी ॥ ९९॥

---

अध्याय ४६ मयूरचित्रकाध्यायः
दिव्यान्तरिक्षाश्रयमुक्तमादौ मया फलं शस्तमशोभनं च ।
प्रायेण चारेषु समागमेषु युद्धेषु मार्गादिषु विस्तरेण ॥ १॥
भूयो वराहमिहिरस्य न युक्तमेतत्
कर्तुं समासकृदसविति तस्य दोषः ।
तज्ज्ञैः न वाच्यमिदमुक्तफलानुगीति
यद् बर्हि (वर्हि) चित्रकमिति प्रथितं वरांगम् ॥ २॥
स्वरूपमेव तस्य तत्प्रकीर्तितानुकीर्तनम् ।
ब्रवीम्यहं न चेदिदं तथाऽपि मेऽत्र वाच्यता ॥ ३॥
उत्तरवीथिगता द्युतिमन्तः क्षेमशुभिक्षशिवाय समस्ताः ।
दक्षिणमार्गगता द्युतिहीनाः क्षुद्भयतस्करमृत्युकराः ते ॥ ४॥
कोष्ठागारगते भृगुपुत्रे पुष्यस्थे च गिराम् प्रभविष्णौ ।
निर्वैराः क्षितिपाः सुखभाजः संहृष्टाश्च जना गतरोगाः ॥ ५॥
पीडयन्ति यदि कृत्तिकां मघां रोहिणीं श्रवमेन्द्रमेव वा ।
प्रोज्झ्य सूर्यमपरे ग्रहाः तदा पश्चिमा दिग् अनयेन पीड्यते ॥ ६॥
प्राच्यां चेद् ध्वजवदवस्थिता दिनान्ते
प्राच्यानां भवति हि विग्रहो नृपाणाम् ।
मध्ये चेद् भवति हि मध्यदेशपीठा (पीडा)
रूक्षैः तैः न तु रुचिमन् (रुचिरैः) मयूखवद्भिः ॥ ७॥
दक्षिणां ककुभमाश्रितः (आश्रितैः) तु तैः
दक्षिणापथपयोमुचां क्षयः ।
हीनरूक्षतनुभिश्च विग्रहः स्थूलदेहकिरणान्वितैः शुभम् ॥ ८॥
उत्तरमार्गे स्पष्टमयूखाः शान्तिकराः ते तन् नृपतीनाम् ।
ह्रस्वशरीरा भस्मसवर्णा दोषकराः स्युः देशनृपाणाम् ॥ ९॥
नक्षत्राणां तारकाः सग्रहाणाम्
धूमज्वालाविस्फुलिंगान्विताश्चेत् ।
आलोकं वा निर्निमित्तं न यान्ति
याति ध्वंसं सर्वलोकः सभूपः ॥ १०॥
दिवि भाति यदा तुहिनांशुयुगं
द्विजवृद्धिः अतीव तदाशु शुभा ।
तदनन्तरवर्णरणोऽर्कयुगे
जगतः प्रलयः त्रिचतुष्प्रभृति ॥ ११॥
मुनीन् अभिजितं ध्रुवं मघवतश्च भं संस्पृशन
शिखी घनविनाशकृत् कुशलकर्महा शोकदः ।
भुजंगं (भुजंगभं) अथ संस्पृशेद् भवति वृष्टिनाशो ध्रुवं
क्षयं व्रजति विद्रुतो जनपदश्च बालाकुलः ॥ १२॥
प्राग्द्वारेषु चरन् रविपुत्रो नक्षत्रेषु करोति च वक्रम् ।
दुर्भिक्षं कुरुते महदुग्रं (भयमुग्रं) मित्राणां च विरोधमवृष्टिम् ॥ १३॥
रोहिणीशकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथवा शिखी ।
किं वदामि यदनिष्टसागरे जगदशेषमुअपयाति संक्षयम् ॥ १४॥
उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा ।
अनुभवति पुराकृतं तदा फलमशुभं सचराचरं जगत् ॥ १५॥
धनुःस्थायी रूक्षो रुधिरसदृशः क्षुद्भयकरो
बलोद्योगं चन्द्रः (चेन्दुः) कथयति जयं ज्याऽस्य च यतः ।
गवांअवाक) शृंगो गोघ्नो निधनमपि सस्यस्य कुरुते
ज्वलन् धूमायन् वा नृपतिमरणायैव भवति ॥ १६॥
स्निग्धः स्थूलः समशृंगो विशालः तुंगश्चौदग्विचरन् नागवीथ्याम् ।
दृष्टः सौम्यैः अशुभैः विप्रयुक्तो लोकानन्दं कुरुतेऽतीव चन्द्रः ॥ १७॥
पित्र्यमैत्रपुरुहूतविशाखात्वाष्ट्रमेत्य च युनक्ति शशांकः ।
दक्षिणेन न शुभः शुभकृत् (शुभो हितकृत्) स्याद् यद्युदक् चरति मध्यगतो वा ॥ १८॥
परिघ इति मेघरेखा या तिर्यग्भास्करोदयेऽस्ते वा ।
परिधिः तु प्रतिसूर्यो दण्डः त्वृजुः इन्द्रचापनिभः ॥ १९॥
उदयेऽस्ते वा भानोः ये दीर्घा रश्मयः त्वमोघाः ते ।
सुरचापखण्डम् ऋजु यद्रोहितमैरावतं दीर्घम् ॥ २०॥
अर्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् ।
तेजःपरिहानिमुखाद् भानोः अर्धोदयो यावत् ॥ २१॥
तस्मिन् सन्ध्याकाले चिह्नैः एतैः शुभाशुभं वाच्यम् ।
सर्वैः एतैः स्निग्धैः सद्यो वर्षं भयं रूक्षैः ॥ २२॥
अच्छिन्नः परिघो वियग विमलं श्यामा मयूखा रवेः
स्निग्धा दीधितयः मितं (सितं) सुरधनुर्विद्युग पूर्वोत्तरा ।
स्निग्धो मेघतरुः दिवाकरकरैः आलिंगितो वा यदा
वृष्टिः स्याद् यदि वाऽर्कमस्तसमये मेघो महान् छादयेत् ॥ २३॥
खण्डो वक्रः कृष्णो ह्रस्वः काकाद्यैः वा चिह्नैः विद्धः ।
यस्मिन् देशे रूक्षश्चार्कः तत्राभावः प्रायो राज्ञः ॥ २४॥
वाहिनीं समुपयाति पृष्ठतो मांसभुक् खगगणो युयुत्सतः ।
यस्य तस्य बलविद्रवो महान् अग्रैः तु विजयो विहंगमैः ॥ २५॥
भानोरुदये यदि वास्तमये गन्धर्वपुरप्रतिमा ध्वजिनी ।

विंबं निरुणद्धि तदा नृपतेः प्राप्तं समरं सभयं प्रवदेत् ॥ २६॥
शस्ता शान्तिद्विजमृगघुष्टा सन्ध्या स्निग्धा मृदुपवना च ।
पांशुध्वस्ता जनपदनाशं धत्ते रूक्षा रुधिरनिभा वा ॥ २७॥
यद्विस्तरेण कथितं मुनिभिः तदस्मिन
सर्वं मया निगदितं पुनरुक्तवर्जम् ।
श्रुत्वाऽपि कोकिलरुतं बलिभुग्विरौति
यत्तत् स्वभावकृतमस्य पिकं न जेतुम् ॥ २८॥

अध्याय ४७ पुष्यस्नानाध्यायः

मूलं मनुजाधिपतिः प्रजातरोः तदुपघातसंस्कारात् ।
अशुभं शुभं च लोके भवति यतोऽतो नृपतिचिन्ता ॥ १॥
या व्याख्याता शान्तिः स्वयंभुवा सुरगुरोः महेन्द्रार्थे ।
तां प्राप्य वृद्धगर्गः प्राह यथा भागुरेः शृणुत ॥ २॥
पुष्यस्नानं नृपतेः कर्तव्यं दैववित्पुरोधाभ्याम् ।
नातः परं पवित्रं सर्वौत्पातान्तकरमस्ति ॥ ३॥
श्लेष्मातकाक्षकन्टकिकटुतिक्तविगन्धिपादपविहीने ।
कौशिकगृध्रप्रभृतिभिः अनिष्टविहगैः परित्यक्ते ॥ ४॥
तरुणतरुगुल्मवल्लीलताप्रतानान्विते (वृते) वनोद्देशे ।
निरुपहतपत्रपल्ल्वमनोज्ञमधुरद्रुमप्राये ॥ ५॥
कृकवाकुजीवजीवकशुकशिखिशतपत्रचाषहारीतैः ।
क्रकरचकोरकपिञ्जलवञ्जुलपारावतश्रीकैः ॥ ६॥
कुसुमरसपानमत्तद्विरेफपुंस्कोकिलादिभिश्चान्यैः ।
विरुते वनोपकण्ठे क्षेत्रागारे शुचावथवा ॥ ७॥
ह्रदिनी (ह्रदिनी) विलासिनीनां जलखगनखविक्षतेषु रम्येषु ।
पुलिनजघनेषु कुर्याद् दृक्मनसोः प्रीतिजननेषु ॥ ८॥
प्रोत्प्लुतहंसच्छत्रे कारण्डवकुररसारसोद्गीते ।
फुल्लेन्दीवरनयने सरसि सहस्राक्षकान्तिधरे ॥ ९॥
प्रोत्फुल्लकमलवदनाः कलहंसकल (अट्ट स्वन) प्रभाषिण्यः ।
प्रोत्तुंगकुड्मलकुचा यस्मिन् नलिनीविलासिन्यः ॥ १०॥
कुर्याद् गोरोमन्थजफेनलवशकृत्खुरक्षतौपचिते ।
अचिरप्रसूतहुंकृतवल्गितवत्सौत्सवे गोष्ठे ॥ ११॥
अथवा समुद्रतीरे कुशलागतरत्नपोत (पोतरत्न) संबाधे ।
घननिचुललीनजलचरसितखगशबलीकृतोपान्ते ॥ १२॥
क्षमया क्रोध इव जितः सिंहो मृग्याभिभूयते येषु (यत्र) ।
दत्ताभयखगमृगशावकेषु तेष्वाश्रमेष्वथवा ॥ १३॥
कांचीकलापनूपुरगुरुजघनौद्वहनविघ्नितपदाभिः ।
श्रीमति मृगेक्षणाभिः गृहेऽन्यभ्रृतवल्गुवचनाभिः ॥ १४॥
पुण्येष्वायतनेषु च तीर्थेषूद्यानरम्यदेशेषु ।
पूर्वोदक्प्लवभूमौ प्रदक्षिणांभोवहायां च ॥ १५॥
भस्मांगारास्थ्यूषरतुषकेशश्वभ्रकर्कटावासैः ।
श्वाविध (श्वाविन्) मूषकविवरैः वल्मीकैः या च सन्त्यक्ता ॥ १६॥
धात्री घना सुगन्धा स्निग्धा मधुरा समा च विजयाय ।
सेनावासेऽपि एवं योजयितव्या यथायोगम् ॥ १७॥
निष्क्रम्य पुरान् नक्तं दैवज्ञामात्ययाजकाः प्राच्याम् ।
कौबेर्यां वा कृत्वा बलिं दिशीशाधिपायां वा ॥ १८॥
लाजाक्षतदधिकुसुमैः प्रयतः प्रणतः पुरोहितः कुर्यात् ।
आवाहनमथ मन्त्रः तस्मिन् मुनिभिः समुद्दिष्टः ॥ १९॥
(मन्त्र ४७ R०-२१)
आगच्छन्तु सुराः सर्वे येऽत्र पूजाभिलाषिणः ।
दिशो नागा द्विजाश्चैव ये चाप्यन्ये (चानेयपि) ऽंशभागिनः ॥ २०॥
आवाह्यएवम् ततः सर्वान् एवं ब्रूयात् पुरोहितः ।
श्वः पूजां प्राप्य यास्यन्ति दत्त्वा शान्तिं महीपतेः ॥ २१॥
आवाहितेषु कृत्वा पूजां तां शर्वरीं वसेयुः ते ।
सदसत्स्वप्ननिमित्तं यात्रायां स्वप्नविधिरुक्तः ॥ २२॥
अपरेऽहनि प्रभाते संभारान् उपहरेद् यथोक्तगुणान् ।
गत्वाऽवनिप्रदेशे श्लोकाश्चाप्यत्र मुनिगीताः ॥ २३॥
तस्मिन् मण्डलमालिख्य कल्पयेत् तत्र मेदिनीम् ।
नानारत्नाकरवतीं स्थानानि विविधानि च ॥ २४॥
पुरोहितो यथास्थानं नागान् यक्षान् सुरान् पितुन् ।
गन्धर्वाप्सरसश्चैव मुनीन् सिद्धांश्च विन्यसेत् ॥ २५॥
ग्रहांश्च सर्व (सह) नक्षत्रै रुद्रांश्च सह मातृभिः ।
स्कन्दं विष्णुं विशाखं च लोकपालान् सुरस्त्रियः ॥ २६॥
वर्णकैः विविधैः कृत्वा हृद्यैः गन्धगुणान्वितैः ।
यथास्वं पूजयेद् विद्वान् गन्धमाल्यानुलेपनैः ॥ २७॥
भक्ष्यैः अन्नैश्च विविधैः फलमूलामिषैः तथा ।
पानैश्च (पानकैः) विविधैः हृद्यैः सुराक्षीरासवादिभिः ॥ २८॥
कथयाम्यतः परमहं पूजामस्मिन् यथाभिलिखितानाम् ।
ग्रहयज्ञे यः प्रोक्तो विधिः ग्रहाणां स कर्तव्यः ॥ २९॥
मांसओदनमद्यैः पिशाचदितितनयदानवाः पूज्याः ।
अभ्यञ्जनाञ्जनतिलैः पितरो मांसओदनैश्चापि ॥ ३०॥
सामयजुर्भिः मुनयः त्वृग्भिः गन्धैश्च धूपमाल्ययुतैः ।
अश्लेषकवर्णैः त्रिमधुरेण चाभ्यर्चयेद् नागान् ॥ ३१॥
धूपूज्याहुतिमाल्यैः विबुधान् रत्नः (रत्नैः) स्तुतिप्रणामैश्च ।
गन्धर्वान् अप्सरसो गन्धैः माल्यैश्च सुसुगन्धैः ॥ ३२॥
शेषां तु सार्ववर्णिकबलिभिः पूजां न्यसेग सर्वेषाम् ।
प्रतिसरवस्त्रपताकाभूषणयज्ञोपवीतानि ॥ ३३॥
मण्डलपश्चिमभागे कृत्वाग्निं दक्षिणेऽथवा वेद्याम् ।
आदद्यात् संभारान् दर्भान् दीर्घान् अगर्भांश्च ॥ ३४॥
लाजाज्याक्षतदधिमधुसिद्धार्थकगन्धसुमनसो धूपः (धुपान्) ।
गोरोचनाञ्जनतिलाः (तिलान्) स्वर्तुजमधुराणि च फलानि ॥ ३५॥
सघृतस्य पायसस्य च तत्र शरावाणि तैश्च संभारैः ।
पश्चिमवेद्यां पूजां कुर्यात् स्नानस्य सा वेदी ॥ ३६॥
तस्याः कोणेषु दृढान् कलशान् सितसूत्रवेष्टितग्रीवान् ।
सक्षीरवृक्षपल्लवफलापिधानान् व्यवस्थाप्य ॥ ३७॥
पुष्यस्नानविमिश्रेणापूर्णान् अंभसा सरत्नांश्च ।
पुष्यस्नानद्रव्याणि आदद्याद् गर्गगीतानि ॥ ३८॥
ज्योतिष्मतीं त्रायमाणामभयामपराजिताम् ।
जीवां विश्वेश्वरीं पाठां समंगां विजयां तथा ॥ ३९॥

सह्रां च सहदेवीं च पूर्णकोशां शतावरीम् ।
अरिष्टिकां शिवां भद्रां तेषु कुंभेषु विन्यसेत् ॥ ४०॥
ब्राह्मीं क्षेमामजां चैव सर्वबीजानि कांचनीं (कांचनं) ।
मंगल्यानि यथालाभं सर्वौषध्यो रसाः (रसां) तथा ॥ ४१॥
रत्नानि सर्वगन्धाः (सर्वगन्धांश) च बिल्वं च सविकंकतम् ।
प्रशस्तनाम्न्यश्चौषध्यो हिरण्यं मंगलानि च ॥ ४२॥
आदावनडुहश्चर्म जरया संहृतायुषः ।
प्रशस्तलक्षणभृतः प्राचीनग्रीवमास्तरेत् ॥ ४३॥
ततो वृषस्य योधस्य चर्म रोहितमक्षतम् ।
सिंहस्याथ तृतीयं स्याद् व्याघ्रस्य च ततः परम् ॥ ४४॥
चत्वार्येतानि चर्माणि तस्यां वेद्यामुपास्तरेत् ।
शुभे मुहूर्ते संप्राप्ते पुष्ययुक्ते निशाकरे ॥ ४५॥
भद्रासनमेकतमेन कारितं कनकरजतताम्राणाम् ।
क्षीरतरुनिर्मितं वा विन्यस्यं चर्मणामुपरि ॥ ४६॥
त्रिविधः तस्यौच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च ।
माण्दलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः ॥ ४७॥
अन्तर्धाय हिरण्यं तत्रौपविशेन् नरेश्वरः सुमनाः ।
सचिवाप्तपुरोहितदैवपौरकल्याणनामवृतः ॥ ४८॥
वन्दिजनपौरविप्रैः प्रघुष्ट (विप्रप्रघुष्ट) पुण्याहवेदनिर्घोषैः ।
समृदंगशंखतूर्यैः मंगलशब्दैः हतानिष्टः ॥ ४९॥
अहतक्षौमनिवसनं पुरोहितः कंबलेन संछाद्य ।
कृतबलिपूजं कलशैः अभिषिंचेत् सर्पिषा पूर्णैः ॥ ५०॥
अष्टावष्टाविंशतिः अष्टशतं वापि कलशपरिमाणम् ।
अधिकेऽधिके गुणोत्तरमयं च मन्त्रोऽत्र मुनिगीतः ॥ ५१॥
(मन्त्र)
आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥ ५२॥
भौमान्तरिक्षं दिव्यं वा यत् ते कल्मषं (कल्विषं) आगतम् ।
सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥ ५३॥
कंबलमपनीय ततः पुष्यस्नानांबुभिः सफलपुष्पैः ।
अभिषिंचेन् मनुजेन्द्रं पुरोहितोऽनेन मन्त्रेण ॥ ५४॥
(मन्त्र)
सुराः त्वामभिषिंचन्तु ये च सिद्धाः पुरातनाः ।
ब्रह्मा विष्णुश्च रुद्रः (शंभुः) च साध्याश्च समरुद्गणाः ॥ ५५॥
आदित्या वसवो रुद्रा अश्विनौ च भिषग्वरौ ।
अदितिः देवमाता च स्वाहा सिद्धिः सरस्वती ॥ ५६॥
कीर्तिः लक्ष्मीः धृतिः श्रीश्च सिनीवाली कुहूः तथा ।
दनुश्च सुरसा चैव विनता कद्रुः एव च ॥ ५७॥
देवपत्न्यश्च या नोक्ता देवमातर एव च ।
सर्वाः त्वामभिषिंचन्तु दिव्याश्चाप्सरसां गणाः ॥ ५८॥
नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसन्धयः ।
संवत्सरा दिनेशाश्च कलाः काष्ठाः क्षणा लवा ।
सर्वे त्वामभिषिंचन्तु कालस्यावयवाः शुभाः ।
एते चान्ये च मुनयो वेदव्रतपरायणाः ॥ ५९॥
सशिष्याः तेऽभिषिंचन्तु सदाराश्च तपोधनाः ।
वैमानिकाः सुरगणा मनवः सागरैः सह ॥ ६०॥
सरितश्च महाभागा नागाः किंपुरुषाश्तथा ।
वैखानसा महाभागा द्विजा वैहायसाश्च ये ॥ ६१॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि च ।
मरीचिः अत्रिः पुलहः पुलस्त्यः क्रतुः अंगिराः ॥ ६२॥
भृगुः सनत्कुमारश्च सनकोऽथ सनन्दनः ।
सनातनश्च दक्षश्च जैगीषव्यो भगन्दरः ॥ ६३॥
एकतश्च द्वितश्चैव त्रितो जाबालिकश्यपौ ।
दुर्वासा दुर्विनीतश्च कण्वः कात्यायनः तथा ॥ ६४॥
मार्कण्डेयो दीर्घतपाः शुनःशेफो विदूरथः ।
ऊर्ध्वः संवर्तकश्चैव च्यवनोऽत्रिः पराशरः ॥ ६५॥
द्वैपायनो यवक्रीतो देवराजः सहानुजः ।
पर्वताः तरवो वल्ल्यः पुण्यानि आयतनानि च ॥ ६६॥
प्रजापतिः दितिश्चैव गावो विश्वस्य मातरः ।
वाहनानि च दिव्यानि सर्वलोकाश्चराचराः ॥ ६७॥
अग्नयः पितरः तारा जीमूताः खं दिशो जलम् ।
एते चान्ये च बहवः पुण्यसंकीर्तनाः शुभैः (शुभाः) ॥ ६८॥
तोयैः त्वामभिषिंचन्तु सर्वोत्पातनिबर्हणैः ।
यथाभिषिक्तो मघवान् एतैः मुदितमनसैः (कल्याणम् ते
प्रकुर्वन्तु आयुरारोग्यमेव्व च) ॥ ६९॥
इत्येतैश्चान्यैश्चाप्यथर्वकल्प आहितैः (विहितैः) सरुद्रगणैः ।
कौष्माण्डमहारौहिणकुबेरहृद्यैः समृद्ध्या च ॥ ७०॥
आपोहिष्ठातिसृभिः हिरण्यवर्णा इति चतसृभिः जप्तम् ।
कार्पासिकवस्त्रयुगं बिभृयात् स्नातो नराधिपतिः ॥ ७१॥
पुण्याहशंखशब्दैः आचान्तोऽभ्यर्च्य देवगुरुविप्रान् ।
छत्रध्वजायुधानि च ततः स्वपूजां प्रयुञ्जीत ॥ ७२॥
आयुष्यं वर्चस्यं रायस्पोषाभिः ऋग्भिः एताभिः ।
परिजप्तं वैजयिकं नवं विदध्यादलंकारम् ॥ ७३॥
गत्वा द्वितीयवेदीं समुपविशेगर्मणां उपरि राजा ।
देयानि चैव चर्माणि उपर्युपर्येवमेतानि ॥ ७४॥
वृषस्य वृषदंशस्य रुरोश्च पृषतस्य च ।
तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥ ७५॥
मुख्यस्थाने जुहुयात् पुरोहितोऽग्निं समित्तिलघृताद्यैः ।
त्रिनयनशक्रबृहस्पतिनारायणनित्यगतिऋग्भिः ॥ ७६॥
इन्द्रध्वजनिर्दिष्टानि अग्निनिमित्तानि दैवविद् ब्रूयात् ।
कृत्वाऽशेषसमाप्तिं पुरोहितः प्राञ्जलिः ब्रूयात् ॥ ७७॥
यान्तु देवगणाः सर्वे पूजामादाय पार्थिवात् ।
सिद्धिं दत्त्वा तु विपुलांसुविपुलां) पुनः आगमनाय च (वै)
॥ ७८॥
नृपतिः अतो दैवज्ञं पुरोहितं चार्चयेद् धनैः बहुभिः ।
अन्यांश्च दक्षिणीयान् यथोचितं (यथार्हतः) श्रोत्रियप्रभृतीन्
॥ ७९॥
दत्त्वाऽभयं प्रजानामाघातस्थानगान् विसृज्य पशून् ।
बधनमोक्षं कुर्यादभ्यनन्तरदोषकृद्वर्जम् ॥ ८०॥
एतत् प्रयुज्यमानं प्रतिपुष्यं सुखयशोऽर्थवृद्धिकरम् ।
पुष्याद् (पुष्यं) विनार्धफलदा पौषी शान्तिः परा (पुरा)
प्रोक्ता ॥ ८१॥

राष्ट्रौत्पातौपसर्गेषु राह्वोः केतोश्च दर्शने ।
ग्रहावमर्दने चैव पुष्यस्नानं समाचरेत् ॥ ८२॥
नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति ।
मंगलं चापरं नास्ति यदस्मादतिरिच्यते ॥ ८३॥
अधिराज्यार्थिनो राज्ञः पुत्रजन्म च कांक्षतः ।
तत्पूर्वमभिषेके च विधिः एष प्रशस्यते ॥ ८४॥
महेन्द्रार्थमुवाचैदम् बृहत्कीर्तिः बृहस्पतिः ।
स्नानमायुष्प्रजावृद्धिसौभाग्यकरणं परम् ॥ ८५॥
अनेनैव विधानेन हस्त्यश्वं स्नापयेत् ततः (स्नापयीत यः) ।
तस्यामयविनिर्मुक्तं परां सिद्धिमवाप्नुयात् ॥ ८६॥

---

अध्याय ४८ पट्टलक्षणाध्यायः
विस्तरशो निर्दिष्टं पट्टाणां लक्षणं यदाचार्यैः ।
तत् संक्षेपः क्रियते मयाऽत्र सकलार्थसंपन्नः ॥ १॥
पट्टः शुभदो राज्णां मध्येऽष्टावंगुलानि विस्तीर्णः ।
सप्त नरेन्द्रमहिष्याः षड युवराजस्य निर्दिष्टः ॥ २॥
चतुरंगुलविस्तारः पट्टः सेनापतेः भवति मध्ये ।
द्वे च प्रसादपट्टः पंचैते कीर्तिताः पट्टाः ॥ ३॥
सर्वे द्विगुणायामा मध्यादर्धेन पार्श्वविस्तीर्णाः ।
सर्वे च शुद्धकांचनविनिर्मिताः श्रेयसो वृद्ध्यै ॥ ४॥
पंचशिखो भूमिपतेः त्रिशिखो युवराजपार्थिवमहिष्योः ।
एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया ॥ ५॥
क्रियमाणं यदि पत्रं सुखेन विस्तारमेति पट्टस्य ।
वृद्धिजयौ भूमिपतेः तथा प्रजानां च सुखसंपत् ॥ ६॥
जीवितराज्यविनाशं करोति मध्ये व्रणः समुत्पन्नः ।
मध्ये स्फुटितः त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः ॥ ७॥
अशुभनिमित्तौत्पत्तौ शास्त्रज्ञः शान्तिमादिशेद् राज्ञः ।
शस्तनिमित्तः पट्टो नृपराष्ट्रविवृद्धये भवति ॥ ८॥

---

अध्याय ४९ खड्गलक्षणाध्यायः
अंगुलशतार्धमुत्तम ऊनः स्यात् पंचविंशतिः (पञ्चविंशतिं) खड्गः ।
अंगुलमानाज्ञेयो व्रणोऽशुभो विषमपर्वस्थः ॥ १॥
श्रीवृक्षवर्धमानातपत्रशिवलिंगकुण्डलाब्जानाम् ।
सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानां च ॥ २॥
कृकलासकाककंकक्रव्यादकबन्धवृश्चिकाकृतयः ।
खड्गे व्रणा न शुभदा वंशानुगताः प्रभूताश्च ॥ ३॥
स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो न दृग्मनोऽनुगतः ।
अस्वन इति चानिष्टः प्रोक्तविपर्यस्त इष्टफलः ॥ ४॥
क्वणितं मरणायौक्तं पराजयाय प्रवर्तनं कोशात् ।
स्वयमुद्गीर्णे युद्धं ज्वलिते विजयो भवति खड्गे ॥ ५॥
नाकारणं विवृणुयान् न विघट्टयेग
पश्येन् न तत्र वदनं न वदेग मूल्यम् ।
देशं न चास्य कथयेत् प्रतिमान् आनयेन् न
नैव स्पृशेन् नृपतिः अप्रयतोऽसियष्टिम् ॥ ६॥
गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश्च ।
करवीरपत्रशूलाग्रमण्डलाग्राः प्रशस्ताः स्युः ॥ ७॥
निष्पन्नो न छेद्यो निकषैः कार्यः प्रमाणयुक्तः सः ।
मूले म्रियते स्वामी जननी तस्याग्रतश्छिन्ने ॥ ८॥
यस्मिन् त्सरुप्रदेशे व्रणो भवेत् तद्वदेव खड्गस्य ।
वनितानामिव तिलको गुह्ये वाच्यो मुखे दृष्ट्वा ॥ ९॥
अथवा स्पृशति यदंगं प्रष्टा निस्त्रिंशभृत् तदवधार्य ।
कोशस्थस्यादेश्यो व्रणोऽस्ति शास्त्रं विदित्वेदम् ॥ १०॥
शिरसि स्पृष्टे प्रथमे अंगुले द्वितीये ललाटसंस्पर्शे ।
भ्रूमध्ये च तृतीये नेत्रे स्पृष्टे चत्रुथे च ॥ ११॥
नासौष्ठ (नासोष्ठ) कपोलहनुश्रवणग्रीवांसके च (अंसकेषु) पंचाद्याः ।
उरसि द्वादशसंस्थः त्रयोदशे कक्षयोः ज्ञेयः ॥ १२॥
स्तनहृदयोदरकुक्षिनाभौ (कुक्षिनाभीषु) तु चतुर्दशादयो ज्ञेयाः ।
नाभिमूले कठ्यां गुह्ये चैकोनविंशतितः ॥ १३॥
ऊर्वोः द्वाविंशे स्यादूर्वोः मध्ये व्रणः त्रयोविंशे ।
जानुनि च चतुर्विंशे जंघायां पंचविंशे च ॥ १४॥
जंघामध्ये गुल्फे पार्ष्ण्यां पादे तदंगुलीष्वपि च ।
षड्विंशतिकाद् यावत् त्रिंशदिति मतेन गर्गस्य ॥ १५॥
पुत्रमरणं धनाप्तिः धनहानिः संपदश्च बन्धश्च ।
एकाद्यंगुलसंस्थैः व्रणैः फलं निर्दिशेत् क्रमशः ॥ १६॥
सुतलाभः कलहो हस्तिलब्धयः पुत्रमरणधनलाभौ ।
क्रमशो विनाशवनिताप्तिचित्तदुःखानि षट्प्रभृति ॥ १७॥
लब्धिः हानिः स्त्रीलब्धयो (हानिस्त्रीलब्धयो) बधो वृद्धिमरणपरितोषाः ।
ज्ञेयाश्चतुर्दशादिषु धनहानिश्चैकविंशे स्यात् ॥ १८॥
वित्ताप्तिः अनिर्वाणं धनागमो मृत्युसंपदोऽस्वत्वम् ।
ऐश्वर्यमृत्युराज्यानि च क्रमात् त्रिंशदिति यावत् ॥ १९॥
परतो न विशेषफलं विषमसमस्थाः तु पापशुभफलदाः ।
कैश्चिदफलाः प्रदिष्टाः त्रिंशत्परतोऽग्रमिति यावत् ॥ २०॥
करवीरौत्पलगजमदघृतकुंकुमकुन्दचंपकसगन्धः ।
शुभदोऽनिष्टो गोमूत्रपंकमेदःसदृशगन्धः ॥ २१॥
कूर्मवसासृक्क्षारोपमश्च भयदुःखदो भवति गन्धः ।
वैदूर्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥ २२॥
इदमौशनसं च शस्त्रपानं
रुधिरेण श्रियमिच्छतः प्रदीप्ताम् ।
हविषा गुणवत्सुताभिलिप्सोः
सलिलेनाक्षयमिच्छतश्च वित्तम् ॥ २३॥
वडवौष्ट्रकरेणुदुग्धपानं
यदि पापेन समीहतेऽर्थसिद्धिम् ।
झषपित्तमृगाश्वबस्तदुग्धैः
करिहस्तच्छिदये सतालगर्भैः ॥ २४॥
आर्कं पयो हुडुविषाणमषीसमेतं
पारावताखुशकृता च युतः (युतं) प्रलेपः ।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चात्शितस्य न शिलासु भवेद् विघातः ॥ २५॥
क्षारे कदल्या मथितेन युक्ते

दिनौषिते पायितमायसं यत् ।
सम्यक् शितं चाश्मनि नैति भंगं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥ २६ ॥

---

अध्याय ५० अंगविद्याध्याय
दैवज्ञेन शुभाशुभं दिगुदितस्थानहृतानीक्षता
वाच्यं प्रष्टृनिजापरांगघटनां चालोक्य कालं धिया ।
सर्वज्ञो हि चराचरात्मकतया असौ सर्वदर्शो विभुश
चेष्टाव्याहृतिभिः शुभाशुभफलं सन्दर्शयत्यर्थिनाम् ॥ १ ॥
स्थानं पुष्पसुहासिभूरिफलभृत्सुस्निग्धकृत्तिच्छद्
सत्पक्षिच्युतशस्तसंज्ञिततरुच्छायौपगूढं समम् ।
देवऋषिद्विजसाधुसिद्धनिलयं सत्पुष्पसस्यौक्षितम्
सत्स्वादूदकनिर्मलत्वजनिताह्लादं च सच्छाद्वलं
(सच्छाड्वलं) ॥ २ ॥
छिन्नभिन्नकृमिखातकण्टकिप्लुष्टरूक्षकुटिलैः न सत् कुजैः ।
क्रूरपक्षियुतनिन्द्यनामभिः शुष्कशीर्णबहुपर्णचर्मभिः (वर्मभिः)
॥ ३ ॥
श्मशानशून्यायतनं चतुष्पथं
तथा अमनोज्ञं विषमं सदोषरम् ।
अवस्करांगारकपालभस्मभिश
चितं तुषैः शुष्कतृणैः नशोभनम् ॥ ४ ॥
प्रव्रजितनग्ननापितरिपुबन्धनसौनिकैः (सूनिकैः) तथा
श्वपचैः ।
कितवयतिपीडितैः युतमायुधमाध्वीकविक्रयैः न शुभम् ॥
५ ॥
(दिक्काललक्षण)
प्रागुत्तरेशाश्च दिशः प्रशस्ताः
प्रष्टुः न वाय्वंबुयमाग्निरक्षः ।
पूर्वाह्णकालेऽस्ति शुभं न रात्रौ
सन्ध्याद्वये प्रश्नकृतोऽपराह्णे ॥ ६ ॥
यात्राविधाने हि शुभाशुभं यत्
प्रोक्तं निमित्तं तदिहापि वाच्यम् ।
दृष्ट्वा पुरो वा जनताहृतं वा
प्रष्टुः स्थितं पाणितलेऽथ वस्त्रे ॥ ७ ॥
(पुंसंज्ञकानि)
अथांगानि ऊरू ओष्ठस्तनवृषणपादं च दशना
भुजौ हस्तौ गण्डौ कचगलनखांगुष्ठमपि यत् ।
सशंखं कक्षांसं श्रवण (लल्षा सश्रवंअ) गुदसन्धीति पुरुषे
(स्त्रीसंज्ञकानि)
स्त्रियां भ्रूनासास्फिग्वलिकटिसुलेखांगुलिचयम् ॥ ८ ॥
जिह्वा ग्रीवा पिण्डिके पार्ष्णियुग्मं
जंघे नाभिः कर्णपाली कृकाटी ।
(नपुंसक)
वक्त्रं पृष्ठं जत्रुजानुअस्थिपार्श्वे
हृत्तालुअक्षी मेहनौरस्त्रिकं च ॥ ९ ॥
नपुंसकाख्यं च शिरो ललाटमाश्वाद्यसंज्ञैः अपरैश्चिरेण ।
सिद्धिः भवेज्जातु नपुंसकैः नो रूक्षक्षतैः भग्नकृशैश्च पूर्वैः ॥
१० ॥
स्पृष्टे वा चालिते वापि पादांगुष्ठेऽक्षिरुग् भवेत् ।
अंगुल्यां दुहितुः शोकं शिरोघाते नृपाद् भयम् ॥ ११ ॥
विप्रयोगमुरसि स्वगात्रतः कर्पटाहृतिः अनर्थदा भवेत् ।
स्यात् प्रियाप्तिः अभिगृह्य कर्पटं पृच्छतश्चरणपादयोजितुः
॥ १२ ॥
पादांगुष्ठेन विलिखेद् भूमिं क्षेत्रोत्थचिन्तया ।
हस्तेन पादौ कण्डूयेत् तस्य दासीमयी (दासीमया) च सा
॥ १३ ॥
तालभूर्जपटदर्शनेऽशुकं चिन्तयेत् कचतुषास्थिभस्मगम् ।
व्याधिः आश्रयति रज्जुजालकं वल्कलं च समवेक्ष्य बन्धनम्
॥ १४ ॥
पिप्पलीमरिचशुण्ठिवारिदै रोध्रकुष्ठवसनांबुजीरकैः ।
गन्धमांसिशतपुष्पया वदेत् पृच्छतः तगरकेण चिन्तयेत्
(चिन्तनं) ॥ १५ ॥
स्त्रीपुरुषदोषपीडितसर्वार्थ (अध्व) सुतार्थधान्न्यतनयानाम् ।
द्विचतुष्पदक्षितीनां विनाशतः कीर्तितैः दृष्टैः ॥ १६ ॥
न्यग्रोधमधुकतिन्दुकजंबूप्लक्षाम्रबदर (बदरि) जातिफलैः ।
धनकनकपुरुषलोहांशुकरूप्याउदुंबराप्तिः (उदुंबराप्तिः)
अपि करगैः ॥ १७ ॥
धान्यपरिपूर्णपात्रं कुंभः पूर्णः कुटुंबवृद्धिकरौ ।
गजगोशुनां पुरीषं धनयुवतिसुहृद्विनाशकरम् ॥ १८ ॥
पशुहस्तिमहिषपंकजरजतव्याघ्रैः लभेत दन्दृष्टैः ।
अविधननिवसनमलयजकौशेयाभरणसंघातम् ॥ १९ ॥
पृच्छा वृद्धश्रावकसुपरिव्राड्दर्शने नृभिः विहिता ।
मित्रद्यूतार्थभवा गणिकानृपसूतिकार्थकृता ॥ २० ॥
शाक्यौपाध्यायार्हत् (आर्हत) निरग्रअन्थि (निरग्रअन्थ)
निमित्तनिगमकैवर्तैः ।
चौरचमूपतिवणिजां दासीयोधापणस्थवध्यानाम् ॥ २१ ॥
तापसे शौण्डिके दृष्टे प्रोषितं पशुपालनम् ।
हृद्गतं प्रच्छकस्य (पृच्छकस्य) स्यादुंछवृटौ विपन्नता ॥ २२ ॥
इच्छामि प्रष्टुं भण पश्यत्वार्यः समादिशेत्युक्ते ॥ २३ ॥
संयोगकुटुंबौत्था लाभैश्वर्यौद्गता चिन्ता ॥ २४ ॥
निर्दिशेति गदिते जयाध्वजा (जयाध्वगा)
प्रत्यवेक्ष्य मम चिन्तितं वद ।
आशु सर्वजनमध्यगं त्वया
दृश्यतामिति च बन्धुचौरजा ॥ २५ ॥
(चौरविज्ञान)
अन्तःस्थे अंगे स्वजन उदितो बाह्यजे बाह्य एव (एवं)
पादांगुष्ठांगुलिकलनया दासदासीजनः स्यात् ।
जंघे प्रेष्यो भवति भगिनी नाभितो हृत्स्वभार्या
पाण्यंगुष्ठांगुलिचयकृतस्पर्शने पुत्रकन्ये ॥ २६ ॥
मातरं जठरे मूर्ध्नि गुरुं दक्षिणवामकौ ।
बाहू भ्राता अथ तत्पत्नी स्पृष्ट्वैवं चौरमादिशेत् ॥ २७ ॥
(अपहृतस्य लाभ)

अन्तरंगमवमुच्य बाह्यगस्पर्शनं यदि करोति पृच्छकः ।
श्लेष्ममूत्रशकृतः त्यजन्त्यथो (त्यजन्नधः) पातयेत्
करतलस्थवस्तु चेत् ॥ २८॥
भृशमवनामितांगपरिमोटनतोऽपि अथवा
जनधृतरिक्तभाण्डमवलोक्य च चौरजनम् ।
हृतपतितक्षतास्मृतविनष्टभग्नगत
उन्मुषितमृताद्यनिष्टरवतो लभते न हृतम् ॥ २९॥
(पीडार्तानां मरण)
निगदितमिदं यत्तत् सर्वं तुषास्थिविषादिकैः
सह मृतिकरं पीडार्तानां समं रुदितक्षतैः (क्षुतैः) ।
(भोजनज्ञान)
अवयवमपि स्पृष्ट्वा अन्तःस्थं दृढं मरुदाहरेद्
अतिबहु तदा भुक्त्वा अन्नं संस्थितः सुहितो वदेत् ॥ ३०॥
ललाटस्पर्शनात्शूकदर्शनात्शालिजौदनम् ।
उरःस्पर्शात् षष्टिक आख्यं (अन्नं) ग्रीवास्पर्शे च यावकम् ॥ ३१॥
कुक्षिकुचजठरजानुस्पर्शे माषाः पयस्तिलयवाग्वः ।
आस्वादयते (आस्वादयतः) चओष्ठौ लिहते मधुरं रसं ज्ञेयम् ॥ ३२॥
विसृक्के (विस्पृक्के) स्फोटयेज्जिह्वामाम्ले वक्त्रं विकूणयेत् ।
कटुकेऽथ कषायेऽथ (कटुतिक्तकषायोष्णैः) हिक्केत् ष्ठीवेग सेन्धवे ॥ ३३॥
श्लेष्मत्यागे शुष्कतिक्तं तदल्पं
श्रुत्वा क्रव्यादं वा प्रेक्ष्य वा मांसमिश्रम् ।
भ्रूगण्डओष्ठस्पर्शने शाकुनं तद्
भुक्तं तेनेत्युक्तमेतन् निमित्तम् ॥ ३४॥
मूर्धगलकेशहनुशंखकर्णजंघं वस्तिं च स्पृष्ट्वा ।
गजमहिषमेषशूकरगोशशमृगमहिष मांसयुग् भुक्तम् ॥ ३५॥
द्षृटे श्रुतेऽपु अशकुने गोधामत्स्यामिषं वदेद् भुक्तम् ।
गर्भिण्या गर्भस्य च निपतनमेवं प्रकल्पयेत् प्रश्ने ॥ ३६॥
(गर्भिण्या जन्म)
पुंस्त्रीनपुंसकाख्ये दृष्टेऽनुमिते पुरःस्थिते स्पृष्टे ।
तज्जन्म भवति पानान्नपुष्पफलदर्शने च शुभम् ॥ ३७॥
अंगुष्टेन भ्रूदरं वांगुलिं वा
स्पृष्ट्वा पृच्छेद् गर्भचिन्ता तदा स्यात् ।
मध आज्याद्यैः हेमरत्नप्रवालैः
अग्रस्थैः वा मातृधात्र्यात्मजैश्च ॥ ३८॥
गर्भयुता जठरे करगे स्याद्
दुष्टनिमित्तवशात् तदुदासः ।
कर्षति तज्जठरं यदि पीठ
उत्पीडनतं करगे च करेऽपि ॥ ३९॥
घ्राणाया दक्षिणे द्वारे स्पृष्टे मासोत्तरं वदेत् ।
वामेऽब्दौ (द्वौ) कर्ण एवं मा द्विचतुर्घ्नः श्रुतिस्तने ॥ ४०॥
वेणीमूले त्रीन् सुतान् कन्यके द्वे
कर्णे पुत्रान् पंच हस्ते त्रयं च ।
अंगुष्ठान्ते पंचकं चानुपूर्व्या
पादांगुष्ठे पार्ष्णियुग्मेऽपि कन्याम् ॥ ४१॥
सव्यासव्य ऊरुसंस्पर्शे सूते कन्यासुतद्वयम् ।
स्पृष्टे ललाटमध्यान्ते चतुस्त्रितनया भवेत् ॥ ४२॥
शिरोललाटभ्रूकर्णगण्डं हनुरदा गलम्
सव्यापसव्यस्कन्धश्च हस्तौ चिबुकनालकम् ॥ ४३॥
(गर्भिण्याः कस्मिन् नक्षत्रे जन्तुः जन्म)
उरः कुचं दक्षिणमपि असव्यं
हृत्पार्श्वमेवं जठरं कटिश्च ।
स्फिक्पायुसन्धि ऊरुयुगं च जानू
जंघेऽथ पादाविति कृत्तिकादौ ॥ ४४॥
इति निगदितमेतद् गात्रसंस्पर्शलक्ष्म
प्रकटमभिमताप्त्यै वीक्ष्य शास्त्राणि सम्यक् ।
विपुलमतिरुदारो वेत्ति यः सर्वमेतन
नरपतिजनताभिः पूज्यतेऽसौ सदैव ॥ ४५॥

---

अध्याय ५१ पिटकलक्षणाध्यायः
सितरक्तपीतकृष्णा विप्रादीनां क्रमेण पिटका ये ।
ते क्रमशः प्रोक्तफाला वर्णानां नाग्रजातानां (अग्रजादीनां) ॥ १॥
सुस्निग्धव्यक्तशोभाः शिरसि धनचयं मूर्ध्नि सौभाग्यमाराद्
दौर्भाग्यं भ्रूयुगोत्थाः प्रियजनघटनामाशु दुःशीलतां च ।
तन्मध्योत्थाश्च शोकं नयनपुटगता नेत्रयोः इष्टदृष्टिं
प्रव्रज्यां शंखदेशेऽश्रुजलनिपतनस्थानगा रान्ति चिन्तां
(स्थानगाश्च अतिचिन्तां) ॥ २॥
घ्राणागण्डे वसनसुतदाश्चओष्ठयोः अन्नलाभं
कुर्युः तद्वगिबुकतलगा भूरि वित्तं ललाटे ।
हन्वोः एवं गलकृअपदा भूषणानि अन्नपाने
श्रोत्रे षड्भूतण (षड्भूषण) गणमपि ज्ञानमात्मस्वरूपम् ॥ ३॥
शिरःसन्धिग्रीवाहृदयकुचपार्श्वौरसि गता
अयोघातं घातं सुततनयलाभं शुचमपि ।
प्रियप्राप्तिं स्कन्धेऽपि अटनमथ भिक्षार्थमसकृद्
विनाशं कक्षोत्था विदधति धनानां बहुमुखं (बहुसुखं) ॥ ४॥
दुःखशत्रुनिचयस्य विनाशं (विघातं) पृष्ठबाहुयुगजा रचयन्ति ।
संयमं च मणिबन्धनजाता भूषणाद्यमुपबाहुयुगोत्थाः ॥ ५॥
धनाप्तिं सौभाग्यं शुचमपि करांगुल्युदरगाः
सुपानान्नं नाभौ तदध इह चौरैः धनहृतिम् ।
धनं धान्यं बस्तौ युवतिमथ मेढ्रे सुतनयान
धनं सौभाग्यं वा गुदवृषणजाता विदधति ॥ ६॥
ऊर्वोः यानानांगनालाभं जान्वोः शत्रुजनात् क्षतिम् ।
शस्त्रेण जंघयोः गुल्फेऽध्वबन्धक्लेशदायिनः ॥ ७॥
स्फिक्पार्ष्णिपादजाता धननाशागम्यगमनमध्वानम् ॥ ८॥
बन्धनमग्गुलिनिचयेऽग्गुष्ठे च ज्ञातिलोकतः पूजाम् ॥ ९॥
उत्पातगण्डपिटका दक्षिणतो वामतः त्वभीघाताः ।
धन्या भवन्ति पुंसां तद्विपरीताश्च (तु) नारीणाम् ॥ १०॥
इति पिटकविभागः प्रोक्त आमूर्धतोऽयं
व्रणतिलकविभागोऽपि एवमेव प्रकल्प्यः ।

भवति मशकलक्ष्मावर्तजन्मापि तद्वन
निगदितफलकारि प्राणिनां देहसंस्थम् ॥११॥

## अध्याय ५२ वास्तुविद्या

वास्तुज्ञानमथातः कमलभवान् मुनिपरंपरायातम् ।
क्रियतेऽधुना मया इदम् विदग्धसांवत्सरप्रीत्यै ॥१॥
किमपि किल भूतमभवद् रुन्धानं रोदसी शरीरेण ।
तदमरगणेन सहसा विनिगृह्याधोमुखं न्यस्तम् ॥२॥
यत्र च येन गृहीतं विबुधेनाधिष्ठितः स तत्रैव ।
तदमरमयं विधाता वास्तुनरं कल्पयामास ॥३॥
उत्तममष्टाभ्यधिकं हस्तशतं नृपगृहं पृथुत्वेन ।
अष्टाष्टोनानि एवं पंच सपादानि दैर्घ्येण ॥४॥
षड्भिः षड्भिः हीना सेनापतिसद्मनां चतुःषष्टिः ।
एवं पंच गृहाणि (पंच एवं विस्तारात्) षड्भागसमन्विता दैर्घ्यम् ॥५॥
षष्टिश्चतुर्भिः हीना (चतुर्विहीना) वेश्मानि पंच सचिवस्य ।
स्वाष्टांशयुतो दैर्घ्यं तदर्धतो राजमहिषीणाम् ॥६॥
षड्भिः षड्भिश्चैवं युवराजस्यापवर्जिता अशीतिः ।
त्र्यंशान्विता च दैर्घ्यं पंच तदर्धैः तदनुजनानाम् ॥७॥
नृपसचिवान्तरतुल्यं सामन्तप्रवरराजपुरुषाणाम् ।
नृपयुवराजविशेषः कंचुकिवेश्याकलाज्ञानाम् ॥८॥
अध्यक्षाधिकृतानां सर्वेषां (सर्वेषामेव) कोशरतितुल्यम् ।
युवराजमन्त्रिविवरं कर्मान्ताध्यक्षदूतानाम् ॥९॥
चत्वारिंशद्धीना चतुश्चतुर्भिः तु पंच यावदिति ।
षड्भागयुता दैर्घ्यं दैवज्ञपुरोधसोः भिषजः ॥१०॥
वास्तुनि यो विस्तारः स एव चौच्छ्रायनिश्चयः शुभदः ।
शालैकेषु गृहेष्वपि विस्ताराद् द्विगुणितं दैर्घ्यम् ॥११॥
चातुर्वर्ण्यव्यासो द्वात्रिंशत् सा (स्यात्) चतुश्चतुर्हीना ।
आडोडशादिति परं न्यूनतरमतीव हीनानाम् ॥१२॥
सदशांशं विप्राणां क्षत्रस्याष्टांशसंयुतं दैर्घ्यम् ।
षड्भागयुतं वैश्यस्य भवति शूद्रस्य पादयुतम् ॥१३॥
नृपसेनापतिगृहयोः अन्तरमानेन कोशरतिभवने ।
सेनापतिचातुर्वर्ण्यविवरतो राजपुरुषाणाम् ॥१४॥
अथ पारश (पारस) वादीनां स्वमानसंयोगदलसमं भवनम् ।
हीनाधिकं स्वमानादशुभकरं वास्तु सर्वेषाम् ॥१५॥
पश्वाश्रमिणाममितं धान्यायुधवह्निरतिगृहाणां च ।
नैच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परतः ॥१६॥
सेनापतिनृपतीनां सप्ततिसहिते द्विधाकृते व्यासे ।
शाला चतुर्दशहृते पंचत्रिंशद्धृतेऽलिन्दः ॥१७॥
हस्तद्वात्रिंशादिषु चतुश्चतुस्त्रित्रिकत्रिकाः शालाः ।
सप्तदशत्रितयतिथित्रयोदशकृतांगुलाभ्यधिकाः ॥१८॥
त्रित्रिद्विद्विद्विसमाः क्षयक्रमादंगुलानि चैतेषाम् ।
व्येका विंशतिः अष्टौ विंशतिः अष्टादश त्रितयम् ॥१९॥
शालात्रिभागतुल्या कर्तव्या वीथिका बहिर्भवनात् ।
यद्यग्रतो भवति सा सोष्णीषं नाम तद्वास्तु ॥२०॥
सायाश्रयमिति पश्चात् सावष्टंभं तु पार्श्वसंस्थितया ।
सुस्थितमिति च समन्तात्शास्त्रज्ञैः पूजिताः सर्वाः ॥२१॥
विस्तारषोडशांशः सचतुर्हस्तो भवेद् गृहौच्छ्रायः ।
द्वादशभागेनोनो भूमौ भूमौ समस्तानाम् ॥२२॥
व्यासात् षोडशभागः सर्वेषां सद्मनां भवति भित्तिः ।
पक्वैष्टकाकृतानां दारुकृतानां तु न विकल्पः (सविकल्पः, न विकल्पः) ॥२३॥
एकादशभागयुतः ससप्ततिः नृपबलेशयोः व्यासः ।
उच्छ्रायो अंगुलतुल्यो द्वारस्यार्धेन विष्कंभः ॥२४॥
विप्रादीनां व्यासात् पंचांशोऽष्टादशांगुलसमेतः ।
साष्टांशो विष्कंभो द्वारस्य त्रिगुण उच्छ्रायः ॥२५॥
उच्छ्रायहस्तसंख्यापरिमाणानि अंगुलानि बाहुल्यम् ।
शाखाद्वयेऽपि कार्यं सार्धं तत् स्यादुदुंबरयोः ॥२६॥
उच्छ्रायात् सप्तगुणादशीतिभागः पृथुत्वमेतेषाम् ।
नवगुणितेऽशीत्यंशः स्तंभस्य दशांशहीनोऽग्रे ॥२७॥
समचतुरस्रो (समचतुरश्रो) रुचको वज्रोऽष्टास्रिः (अष्टाश्रिः) द्विवज्रको द्विगुणः ।
द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः ॥२८॥
स्तंभं विभज्य नवधा वहनं भागो घटोऽस्य भागोऽन्यः ।
पद्मं तथा उत्तरोष्ठं कुर्याद् भागेन भागेन ॥२९॥
स्तंभसमं बाहुल्यं भारतुलानामुपर्युपर्यासाम् ।
भवति तुला उपतुलानामूनं पादेन पादेन ॥३०॥
अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम् ।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिः अपि ॥३१॥
नन्द्यावर्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः ।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥३२॥
द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभः ततश्चान्यः ।
तस्मिंश (तद्वद्) च वर्धमाने द्वारं तु न दक्षिणं कार्यम् ॥३३॥
अपरोऽन्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ ।
तदवधिविधृतः (विवृतः) चान्यः प्राग्द्वारं स्वस्तिके शुभदं (ऽशुभदं) ॥३४॥
प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥३५॥
श्रेष्ठं नन्द्यावर्तं सर्वेषां वर्धमानसंज्ञं च ।
स्वस्तिकरुचके मध्ये शेषं शुभदं नृपादीनाम् ॥३६॥
उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम् ।
प्राक्षालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु ॥३७॥
याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत् ।
पक्षघ्नमपरया वर्जितं सुतध्वंसवैरकरम् ॥३८॥
सिद्धार्थमपरयाम्ये यमसूर्यं पश्चिमोत्तरे शाले ।
दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या ॥३९॥
पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम् ।
सिद्धार्थेऽर्थावाप्तिः यमसूर्ये गृहपतेः मृत्युः ॥४०॥
दण्डवधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये ।
वित्तविनाशश्चुल्ल्यां ज्ञातिविरोधः स्मृतः काचे ॥४१॥
एकाशीतिविभागे दश दश पूर्वोत्तरायता रेखाः ।
अन्तः त्रयोदश सुरा द्वात्रिंशद्बाह्यकोष्ठस्थाः ॥४२॥

शिखिपर्जन्यजयन्तेन्द्रसूर्यसत्या भृशोऽन्तरिक्षश्च ।
ऐशान्यादि (ऐशान्याद्याः) क्रमशो दक्षिणपूर्वेऽनिलः कोणे ॥ ४३॥
पूषा वितथबृहत्क्षतयमगन्धर्वाख्यभृंगराजमृगाः ।
पितृदौवारिकसुग्रीवकुसुमदन्तांबुपत्यसुराः ॥ ४४॥
शोषोऽथ पापयक्ष्मा रोगः कोणे ततोऽहिमुख्यौ च ।
भल्लाटसोमभुजगाः ततोऽदितिः दितिः इति क्रमशः ॥ ४५॥
मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राच्याम् ।
एकान्तरात् प्रदक्षिणमस्मात् सविता विवस्वांश्च ॥ ४६॥
विबुधाधिपतिः तस्मान् मित्रोऽन्यो राजयक्ष्मनामा च ।
पृथिवी (पृथ्वी) धरापवत्सावित्येते ब्रह्मणह परिधौ ॥ ४७॥
आपो नामैशाने कोणे हौताशने च सावित्रः ।
जय इति च नैरृते रुद्र आनिलेऽभ्यन्तरपदेषु ॥ ४८॥
आपः तथापवत्सः पर्जन्योऽग्निः दितिश्च वर्गोऽयम् ।
एवं कोणे कोणे पदिकाः स्युः पंच पंच सुराः ॥ ४९॥
बाह्या द्विपदाः शेषाः ते विबुधा विंशति समाख्याताः ।
शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्याः ते ॥ ५०॥
पूर्वोत्तरदिग्मूर्धा पुरुषोऽयमवान्मुखोऽस्य शिरसि शिखी ।
आपो मुखे स्तनेऽस्यार्यमा ह्युरस्यापवत्सश्च ॥ ५१॥
पर्जन्याद्या बाह्या दृक्श्रवणौरःस्थलांसगा देवाः ।
सत्याद्याः पंच भुजे हस्ते सविता च सावित्रः (ससावित्रः) ॥ ५२॥
वितथो बृहत्क्षतयुतः पार्श्वे जठरे स्थितो विवस्वांश्च ।
ऊरू जानु च जंघे स्फिग् इति यमाद्यैः परिगृहीताः ॥ ५३॥
एते दक्षिणपार्श्वे स्थानेष्वेवं च वामपार्श्वस्थाः ।
मेढ्रे शक्रजयन्तौ हृदये ब्रह्मा पिता अंघ्रिगतः (अंग्रिगतः) ॥ ५४॥
अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगाः तिर्यक् ।
ब्रह्मा चतुष्पदोऽस्मिन्न् अर्धपदा ब्रह्मकोणस्थाः ॥ ५५॥
अष्टौ च बहिष्कोणेष्वर्धपदाः तदुभयस्थिताः सार्धाः ।
उक्तेभ्यो ये शेषाः ते द्विपदा विंशतिः ते हि (च) ॥ ५६॥
संपाता वंशानां मध्यानि समानि यानि च पदानाम् ।
मर्माणि तानि विन्द्यान् न तानि परिपीडयेत् (विन्द्यान्न् अपरिपीडयेत्) प्राज्ञः ॥ ५७॥
तानि अशुचिभाण्डकीलस्तंभाद्यैः पीडितानि शल्यैश्च ।
गृहभर्तुः तत्तुल्ये पीडामंगे प्रयच्छन्ति ॥ ५८॥
कण्डूयते यदंगं गृहभर्तुः (गृहपतिना) यत्र वा अमराहुत्याम् ।
अशुभं भवेन् निमित्तं विकृतेः वा अग्नेः सशल्यं तत् ॥ ५९॥
धनहानिः दारुमये पशुपीडा रुग्भयानि चास्थिकृते ।
लोहमये शस्त्रभयं कपालकेशेषु मृत्युः स्यात् ॥ ६०॥
अग्गारे स्तेनभयं भस्मनि च विनिर्दिशेत् सदाग्निभयम् ।
शल्यं हि मर्मसंस्थं सुवर्णरजतादृतेऽत्यशुभम् ॥ ६१॥
मर्मण्यमर्मगो वा रुणद्ध्यर्थागमं तुषसमूहः) ।
अपि नागदन्तको मर्मसंस्थितो दोषकृद् भवति ॥ ६२॥
रोगाद् वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् ।
मुख्याद् भृशं जयन्ताग भृंगमदितेश्च सुग्रीवम् ॥ ६३॥
तत्संपाता नव ये तानि अतिमर्माणि संप्रदिष्टानि ।
यश्च पदस्याष्टांशः तत् प्रोक्तं मर्मपरिमाणम् ॥ ६४॥
पदहस्तसंख्यया सम्मितानि वंशो अंगुलानि विस्तीर्णः ।
वंशव्यासोऽध्यर्धः शिराप्रमाणं विनिर्दिष्टम् ॥ ६५॥
सुखमिच्छन् ब्रह्माणं यत्नाद् रक्षेद् गृही गृहान्तःस्थं (गृतान्तस्थं) ।
उच्छिष्टाद्युपघाताद् गृहपतिरुपतप्यते तस्मिन् ॥ ६६॥
दक्षिणभुजेन हीने वास्तुनरेऽर्थक्षयो अंगनादादोषाः (अंगनादोषाः) ।
वामेऽर्थधान्यहानिः शिरसि गुणैः हीयते सर्वैः ॥ ६७॥
स्त्रीदोषाः सुतमरणं प्रेष्यत्वं चापि चरणवैकल्ये ।
अविकलपुरुषे वसतां मानार्थयुतानि सौख्यानि ॥ ६८॥
गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिता देवाः ।
तेषु च यथानुरूपं वर्णा विप्रादयो वास्याः ।
वासगृहाणि च विन्द्याद् विप्रादीनामुदग्दिगाद्यानि ।
विशतां च यथा भवनं भवन्ति तानि एव दक्षिणतः ॥ ६९॥
नवगुणसूत्रविभक्तानि अष्टगुणेनाथवा चतुःषष्टेः ।
द्वाराणि यानि तेषामनलादीनां फलोपनयः ॥ ७०॥
अनिलभयं स्त्रीजननं (स्त्रीजन्म) प्रभूतधनता नरेन्द्रवाल्लभ्यम् ।
क्रोधपरतानृतत्वं क्रौर्यं चौर्यं च पूर्वेण ॥ ७१॥
अल्पसुतत्वं प्रैष्यं नीचत्वं भक्ष्यपानसुतविरृद्धिः ।
रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ॥ ७२॥
सुतपीडा रिपुवृद्धिः न सुतधनाप्तिः (धनस्ताप्तिः) सुतार्थफलसंपत् ।
धनसंपन् नृपतिभयं धनक्षयो रोग इत्यपरे ॥ ७३॥
वधबन्धो रिपुवृद्धिः सुतधनलाभः (धनसुतलाभः) समस्तगुणसंपत् ।
पुत्रधनाप्तिः वैरं सुतेन दोषाः स्त्रिया नैःस्वम् ॥ ७४॥
मार्गतरुकोणकूपस्तंभभ्रमविद्धमशुभ्भदं द्वारम् ।
उच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं न दोषाय ॥ ७५॥
रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा ।
पंकद्वारे शोको व्ययोऽंबुनिःस्राविणि (अंबुनि श्राविणि) प्रोक्तः ॥ ७६॥
कूपेनापस्मारो भवति विनाशश्च देवताविद्धे ।
स्तंभेन स्त्रीदोषाः कुलनाशो ब्राह्मणाभिमुखे (ब्राह्मणोऽभिमुखे) ॥ ७७॥
उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः ।
मानाधिके नृपभयं दस्युभयं व्यसनमेव नीचे च (व्यसनदं नीचं) ॥ ७८॥
द्वारं द्वारस्यौपरि यत्तन् न शिवाय संकटं यच्च ।
आव्यात्तं क्षुद्भयदं कुब्जं कुलनाशनं भवति ॥ ७९॥
पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय ।
बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा ॥ ८०॥

मूलद्वारं नान्यैः द्वारैः अभिसन्दधीत रूपऋद्धया ।
घटफलपत्रप्रमथादिभिश्च तन्मंगलैश्चिनुयात् ॥ ८१॥
ऐशान्यादिषु कोणेषु संस्थिता बाह्यतो गृहस्यैताः ।
चरकी विदारिनामा अथ पूतना राक्षसी चेति ॥ ८२॥
पुरभवनग्रामाणां ये कोणाः तेषु निवसतां दोषाः ।
श्वपचादयोऽन्त्यजात्याः तेष्वेव विवृद्धिमायान्ति ॥ ८३॥
याम्यादिष्वशुभफला जाताः तरवः प्रदक्षिणेनैते ।
उदगादिषु प्रशस्ताः प्लक्षवटौदुंबराश्वत्था (उदुंबराश्वत्थाः) ॥ ८४॥
आसन्नाः कण्ठकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय ।
फलिनः प्रजाक्षयकरा दारूणि अपि वर्जयेदेषाम् ॥ ८५॥
छिन्द्याद् यदि न तरूंश्तान् तदन्तरे पूजितान् वपेदन्यत् (अन्यान्) ।
पुन्नागाशोकारिष्टबकुलपनसान् शमीशालौ ॥ ८६॥
शस्तौषधिद्रुमलता मधुरा सुगन्धा
स्निग्धा समा न सुषिरा च मही नराणाम् ।
अप्यध्वनि श्रमविनोदमुपागतानां
धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ॥ ८७॥
सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे ।
उद्वेगो देवकुले चतुष्पदे (चतुष्पथे) भवति चाकीर्तिः ॥ ८८॥
चैत्ये भयं ग्रहकृतं वल्मीकश्वभ्रसंकुले विपदः ।
गर्तायां तु पिपासा कूर्माकारे धनविनाशः ॥ ८९॥
उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव ।
विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ॥ ९०॥
गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम् ।
यद्यूनमनिष्टं तत् समे समं धन्यमधिकं यत् ॥ ९१॥
श्वभ्रमथवा अंबुपूर्णं पदशतमित्वागतस्य यदि नोनम् ।
तद्धन्यं यच्च भवेत् पलानि अपामाढकं चतुःषष्टिः ॥ ९२॥
आमे वा मृत्पात्रे श्वभ्रस्थे दीपवर्तिः अभ्यधिकम् ।
ज्वलति दिशि यस्य शस्ता सा भूमिः तस्य वर्णस्य ॥ ९३॥
श्वभ्रोषितं न कुसुमं यस्य (यस्मिन्) प्रम्लायतेऽनुवर्णसमम् ।
तत्तस्य भवति शुभदं यस्य च यस्मिन् मनो रमते ॥ ९४॥
सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः ।
गन्धश्च भवति यस्यां (यस्या) घृतरुधिरान्नाद्यमद्यसमः ॥ ९५॥
कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रेमेण मही ।
ह्यनुवर्णं (अनुवर्णं) वृद्धिकरी मधुरकषायाम्लकटुका च ॥ ९६॥
कृष्टां प्ररूढबीजां गोऽध्युषितां ब्राह्मणैः प्रशस्तां च ।
गत्वा महीं गृहपतिः काले सांवत्सरोद्दिष्टे ॥ ९७॥
भक्ष्यैः नानाकारैः दध्यक्षतसुरभिकुसुमधूपैश्च ।
दैवतपूजां कृत्वा स्थपतीन् अभ्यर्च्य विप्रांश्च ॥ ९८॥
विप्रः स्पृष्ट्वा शीर्षं वक्षश्च क्षत्रियो विशाश्च ऊरू ।
शूद्रः पादौ स्पृष्ट्वा कुर्याद् रेखां गृहारंभे ॥ ९९॥
अंगुष्ठकेन कुर्यान् मध्यांगुल्याऽथवा प्रदेशिन्या ।
कनकमणिरजतमुक्तादधिकफलकुसुमाक्षतैश्च शुभम् ॥ १००॥
शस्त्रेण शस्त्रमृत्युः बन्धो लोहेन भस्मनाग्निभयम् ।
तस्करभयं तृणेन च काष्ठौल्लिखिता च राजभयम् ॥ १०१॥
वक्रा पादालिखिता शत्रुभयक्लेशदा विरूपा च ।
चर्मांगारास्थिकृता दन्तेन च भर्तुः (कर्तुः) अशिवाय ॥ १०२॥
वैरमपसव्यलिखिता प्रदक्षिणं संपदो विनिर्देश्याः ।
वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम् ॥ १०३॥
अर्धनिचितं कृतं वा प्रविशन् स्थपतिः गृहे निमित्तानि ।
अवलोकयेद् गृहपतिः क्व संस्थितः स्पृशति किं चांगम् ॥ १०४॥
रविदीप्ते यदि शकुनिः तस्मिन् काले विरौति परुषरवं (परुषरवः) ।
संस्पृष्टांगसमानं तस्मिन् देशेऽस्थि निर्देश्यम् ॥ १०५॥
शकुनसमयेऽथ्वाऽन्ये हस्त्यश्वश्वादयोऽनुवाशन्ते ।
तत्प्रभवमस्थि तस्मिं तदंगसंभूतमेवैति ॥ १०६॥
सूत्रे प्रसार्यमाणे गर्दभरावोऽस्थिशल्यमाचष्टे ।
श्वशृगाललंघिते वा सूत्रे शल्यं विनिर्देश्यम् ॥ १०७॥
दिशि शान्तायां शकुनिः (शकुनो) मधुरविरावी यदा तदा वाच्यः ।
अर्थः तस्मिन् स्थाने गृहेश्वराधिष्ठिते अंगे वा ॥ १०८॥
सूत्रच्छेदे मृत्युः कीले चावान्मुखे महगः (महान् रोगः) ।
गृहनाथस्थपतीनां स्मृतिलोपे मृत्युः आदेश्यः ॥ १०९॥
स्कन्धाग्युते शिरोरुक् कुलोपसर्गोऽपवर्जिते कुंभे ।
भग्नेऽपि च कर्मिवधश्च्युते करात् गृहपतेः मृत्युः ॥ ११०॥
दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत् प्रथमं (प्रथमां) ।
शेषाः प्रदक्षिणेन स्तंभाश्चैवं समुत्थाप्य (समुत्थाप्याः) ॥ १११॥
छत्रस्रगंबरयुतः कृतधूपविलेपनः समुत्थाप्यः ।
स्तंभः तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेन ॥ ११२॥
विहगादिभिः अवलीनैः आकंपितपतितदुःस्थितैश्च तथा (फलं) ।
शक्रध्वजसदृशफलं तदेव तस्मिन् (सदृशं तस्मिंश्च शुभं) विनिर्दिष्टम् ॥ ११३॥
प्रागुत्तरौन्नते धनसुतक्षयः सुतवधश्च दुर्गन्धे ।
वक्रे ब्न्धुविनाशो न सन्ति गर्भाश्च दिन्मूढे ॥ ११४॥
इच्छेद् यदि गृहवृद्धिं ततः समन्ताद् विवर्धयेत् तुल्यम् ।
एकौद्देशे दोषः प्राग् अथवाऽपि उत्तरे कुर्यात् ॥ ११५॥
प्राग् भवति मित्रवैरं मृत्युभयं दक्षिणेन यदि वृद्धिः ।
अर्थविनाशः पश्चादुदग्विवृद्धिः (उदग्विवृद्धौ) मनस्तापः ॥ ११६॥
ऐशान्यां देवहृहं महानसं यदि चापि कार्यमाग्नेय्याम् ।
नैरृत्यां भाण्डौपस्करोऽर्थधान्यानि मारुत्याम् ॥ ११७॥
प्राच्यादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयं च ।
स्त्रीकलहः स्त्रीदौष्य्वं नैःस्व्यं वित्तात्मजविवृद्धिः ॥ ११८॥
खगनिलयभग्नसंशुष्कदग्धदेवालयश्मशानस्थान् ।
क्षीरतरुधवविभीतकनिंबारणिवर्जितान् छिन्द्यात् (वर्जितांश्छिन्द्यात्) ॥ ११९॥

रात्रौ कृतबलिपूजं प्रदक्षिणं छेदयेद् दिवा वृक्षम् ।
धन्यमुदक्प्राक्पततं न ग्राह्योऽतोऽन्यथा पतितः ॥१२०॥
छेदो यद्यविकारी ततः शुभं दारु तद्गृहौपयिकम् ।
पीते तु मण्डले निर्दिशेत् तरोः मध्यगां गोधाम् ॥१२१॥
मञ्जिष्ठाभे भेको नीले सर्पः तथाऽरुणे सरटः ।
मुद्गाभेऽश्मा कपिले तु मूषकोऽभश्च खड्गाभे ॥१२२॥
धान्यगोगुरुहुताशसुराणां न स्वपेदुपरि नाप्यनुवंशम् ।
नौत्तरापरशिरा न च नग्नो नैव चार्द्रचरणः श्रियमिच्छन् ॥ १२३॥
भूरिपुष्पविकरं (निकरं) सतोरणं तोयपूर्णकलशौपशोभितम् ।
धूपगन्धबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद् गृहम् ॥ १२४॥

---

अध्याय ५३ दकार्गलाध्यायः
धर्म्यं यशस्यं च वदाम्यतोऽहं दकार्गलं (दगार्गलं) येन जलोपलब्धिः ।
पुंसां यथांगेषु शिराः तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः ॥ १॥
एकेन वर्णेन रसेन चांभश्च्युतं नभस्तो वसुधाविशेषात् ।
नानारसत्वं बहुवर्णतां च गतं परीक्ष्यं क्षितितुल्यमेव ॥२॥
पुरुहूतानलयमनिरृतिवरुणपवनेन्दुशंकरा देवाः ।
विज्ञातव्याः क्रमशः प्राच्याद्यानां दिशां पतयः ॥३॥
दिक्पतिसंज्ञा च शिरा नवमी मध्ये महाशिरानाम्नी ।
एताभ्योऽन्याः शतशो विनिःसृता नामभिः प्रथिताः ॥४॥
पातालादूर्ध्वशिरा शुभा (ऊर्ध्वशिराः शुभाः) चतुर्दिक्षु संस्थिता याश्च ।
कोणदिगुत्था न शुभाः शिरानिमित्तानि अतो वक्ष्ये ॥५॥
यदि वेतसोऽबुरहिते देशे हस्तैः त्रिभिः ततः पश्चात् ।
सार्धे पुरुषे तोयं वहति शिरा पश्चिमा तत्र ॥६॥
चिह्नमपि चार्धपुरुषे मण्डूकः पाण्डुरोऽथ मृत् पीता ।
पुटभेदकश्च तस्मिन् पाषाणो भवति तोयमधः ॥७॥
जंब्वाश्चौदग् धस्तैः त्रिभिः शिराधो नरद्वये पूर्वा ।
मृल्लोहगन्धिका पाण्डुरा च (अथ) पुरुषेऽत्र मण्डूकः ॥८॥
जंबूवृक्षस्य प्राग् वल्मीको यदि भवेत् समीपस्थः ।
तस्माद् दक्षिणपार्श्वे सलिलं पुरुषद्वये स्वादु ॥९॥
अर्धपुरुषे च मत्स्यः पारावतसन्निभश्च पाषाणः ।
मृद् भवति चात्र नीला दीर्घं कालं च बहु तोयम् ॥१०॥
पश्चादुदुंबरस्य त्रिभिः एव करैः नरद्वये सार्धे ।
पुरुषे सितोऽहिरश्माञ्जनौपंपऽधः शिरा सुजला ॥११॥
उदग् अर्जुनस्य दृश्यो वल्मीको यदि ततोऽर्जुनाद् धस्तैः ।
त्रिभिः अंबु भवति पुरुषैः त्रिभिः अर्धसमन्वितैः पश्चात् ॥ १२॥
श्वेता गोधार्धनरे पुरुषे मृद् धूसरा ततः कृष्णा ।
पीता सिता ससिकता ततो जलं निर्दिशेदमितम् ॥१३॥
वल्मीकौपचितायां निर्गुण्ड्यां दक्षिणेन कथितकरैः ।
पुरुषद्वये सपादे स्वादु जलं भवति चाशोष्यम् ॥१४॥
रोहितमत्स्योऽर्धनरे मृत् कपिला पाण्डुरा ततः परतः ।
सिकता सशर्कराऽथ क्रमेण परतो भवत्यंभः ॥१५॥
पूर्वेण यदि बदर्या वल्मीको दृश्यते जलं पश्चात् ।
पुरुषैः त्रिभिः आदेश्यं श्वेता गृहगोधिकार्धनरे ॥१६॥
सपलाशा बदरी चेद् दिश्यपरस्यां ततो जलं भवति ।
पुरुषत्रये सपादे पुरुषेऽत्र च दुण्डुभः (दुण्डुभिः) चिह्नम् ॥ १७॥
विल्व (बिल्व) उदुंबरयोगे विहाय हस्तत्रयं तु याम्येन ।
पुरुषैः त्रिभिः अंबु भवेत् कृष्णोऽर्धनरे च मण्डूकः ॥१८॥
काकौदुंबरिकायां वल्मीको दृश्यते शिरा तस्मिन् ।
पुरुषत्रये सपादे पश्चिमदिक्स्था वहति सा च ॥१९॥
आपाण्डुपीतिका मृद्गोरसवर्णश्च भवति पाषाणः ।
पुरुषार्धे कुमुदनिभो दृष्टिपथं मूषको याति ॥२०॥
जलपरिहीने देशे वृक्षः कंपिल्लको यदा दृश्यः ।
प्राच्यां हस्तत्रितये वहति शिरा दक्षिणा प्रथमम् ॥२१॥
मृन्नीलोत्पलवर्णा कापोता दृश्यते ततः (चैव दृश्यते) तस्मिन् ।
हस्ते ऽजगन्धको मत्स्यकः (ऽजगन्धिमत्स्यो भवति) पयोऽल्पं च सक्षारम् ॥२२॥
शोणाकतरोः अपरोत्तरे शिरा द्वौ करावतिक्रम्य ।
कुमुदा नाम शिरा सा पुरुषत्रयवाहिनी भवति ॥२३॥
आसन्नो वल्मीको दक्षिणपार्श्वे विभीतकस्य यदि ।
अध्यर्धे भवति (तस्य) शिरा पुरुषे ज्ञेया दिशि प्राच्याम् ॥ २४॥
तस्यैव पश्चिमायां दिशि वल्मीको यदा भवेद् धस्ते ।
तत्रौदग् भवति शिरा चतुर्भिः अर्धाधिकैः पुरुषैः ॥२५॥
श्वेतो विश्वंभरकः प्रथमे पुरुषे तु कुंकुमाभोऽश्मा ।
अपरस्यां दिशि च शिरा नश्यति वर्षत्रयेऽतीते ॥२६॥
सकुशः सित (सकुशासित) ऐशान्यां वल्मीको यत्र कोविदारस्य ।
मध्ये तयोः नरैः अर्धपंचमैः तोयमक्षोभ्यम् ॥२७॥
प्रथमे पुरुषे भुजगः कमलोदरसन्निभो मही रक्ता ।
कुरुविन्दः पाषाणश्चिह्नानि एतानि वाच्यानि ॥२८॥
यदि भवति सप्तपर्णो वल्मीकवृतः तदुत्तरे तोयम् ।
वाच्यं पुरुषैः पंचभिः अत्रापि भवन्ति चिह्नानि ॥२९॥
पुरुषार्धे मण्डूको हरितो हरितालसन्निभा भूश्च ।
पाषाणोऽभ्रनिकाशः सौम्या च शिरा शुभांबुवहा ॥३०॥
सर्वेषां वृक्षाणामधः स्थितो दर्दुरो यदा दृश्यः ।
तस्माद् धस्ते तोयं चतुर्भिः अर्धाधिकैः पुरुषैः ॥३१॥
पुरुषे तु भवति नकुलो नीलो मृत्पीतिका ततः श्वेता ।
दर्दुरसमानरूपः पाषाणो दृश्यते चात्र ॥३२॥
यद्यहिनिलयो दृश्यो दक्षिणतः संस्थितः करञ्जस्य ।
हस्तद्वये तु याम्ये पुरुषत्रितये शिरा सार्धे ॥३३॥
कच्छपकः पुरुषार्धे प्रथमं चौद्भिद्यते शिरा पूर्वा ।
उदग् अन्या स्वादुजला हरितोऽश्माधः ततः तोयम् ॥३४॥
उत्तरतश्च मधूकादहिनिलयः पश्चिमे तरोः तोयम् ।

परिहृत्य पंच हस्तान् अर्धाष्टमपौरुषान् (पौरुषे) प्रथमम् ॥ ३५ ॥
अहिराजः पुरुषेऽस्मिन् धूम्रा धात्री कुलुत्थ (कुलत्त) वर्णोऽश्मा ।
माहेन्द्री भवति शिरा वहति सफेनं सदा तोयम् ॥ ३६ ॥
वल्मीकः स्निग्धो दक्षिणेन तिलकस्य सकुशदूर्वश्चेत् ।
पुरुषैः पंचभिः अंभो दिशि वारुण्यां शिरा पूर्वा ॥ ३७ ॥
सर्पावासः पश्चाद् यदा कदंबस्य दक्षिणेन जलम् ।
परतो हस्तत्रितयात् षड्भिः पुरुषैः तुरीयोनैः ॥ ३८ ॥
कौबेरी चात्र शिरा वहति जलं लोहगन्धि चाक्षोभ्यम् ।
कनकनिभो मण्डूको नरमात्रे मृत्तिका पीता ॥ ३९ ॥
वल्मीकसंवृतो यदि तालो वा भवति नालिकेरो वा ।
पश्चात् षड्भिः हस्तैः नरैश्चतुर्भिः शिरा याम्या ॥ ४० ॥
याम्येन कपित्थस्याहिसंश्रयश्चेदुदग् जलं वाच्यम् ।
सप्त परित्यज्य करान् खात्वा पुरुषान् जलं पंच ॥ ४१ ॥
कर्बुरकोऽहिः पुरुषे कृष्णा मृत् पुटभिदपि च पाषाणः ।
श्वेता मृत् पश्चिमतः शिरा ततश्चोत्तरा भवति ॥ ४२ ॥
अश्मन्तकस्य वामे बदरी वा दृश्यतेऽहिनिलयो वा ।
षड्भिरुदक् तस्य करैः सार्धे पुरुषत्रये तोयम् ।
कूर्मः प्रथमे पुरुषे पाषाणो धूसरः ससिकता मृत् ।
आदौ च शिरा (शिरा च) याम्या पूर्वोत्तरतो द्वितीया च ॥ ४३ ॥
वामेन हरिद्रतरोः वल्मीकश्चेज्जलं भवति पूर्वे (चेत् ततो जलं) ।
हस्तत्रितये सत्र्यंशैः पुंभिः (पुरुषैः सत्र्यंशैः) पंचभिः भवति ॥ ४४ ॥
नीलो भुजगः पुरुषे मृत् पीता मरकतौपमश्चाश्मा ।
कृष्णा भूः प्रथमं वारुणी शिरा दक्षिणेनान्या ॥ ४५ ॥
जलपरिहीने देशे दृश्यन्तेऽनूपजानि चेन् निमितानि (चिह्नानि) ।
वीरणदूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे ॥ ४६ ॥
भारंगी त्रिवृता दन्ती सूकरपादी च लक्ष्मणा चैव ।
नवमालिका च हस्तद्वयेऽंबु याम्ये त्रिभिः पुरुषैः ॥ ४७ ॥
स्निग्धाः प्रलंबशाखा वामनविकट (विट) द्रुमाः समीपजलाः ।
सुषिरा जर्जरपत्रा रूक्षाश्च जलेन सन्त्यक्ताः ॥ ४८ ॥
तिलकाम्रातकवरुणकभल्लातकविल्व (बिल्व) तिन्दुकांकोलाः (अगकोल्लाः) ।
पिण्डारशिरीषाञ्जनपरूषका वञ्जुलोऽतिबला (वञ्जुरातिबला) ॥ ४९ ॥
एते यदि सुस्निग्धा वल्मीकैः परिवृताः ततः तोयम् ।
हस्तैः त्रिभिरुत्तरतश्चतुर्भिः अर्धेन च नरेण (नरस्य) ॥ ५० ॥
अतृणे सतृणा यस्मिन् सतृणे तृणवर्जिता मही यत्र ।
तस्मिन् शिरा प्रदिष्टा वक्तव्यं वा धनं चास्मिन् ॥ ५१ ॥
कण्टक्यकण्टकानां व्यत्यासेऽंभः त्रिभिः करैः पश्चात् ।
खात्वा पुरुषत्रितयं त्रिभागयुक्तं धनं वा स्यात् ॥ ५२ ॥
नदति मही गंभीरं यस्मिंश्चरणाहता जलं तस्मिन् ।
सार्धैः त्रिभिः मनुष्यैः कौबेरी तत्र च शिरा स्यात् ॥ ५३ ॥
वृक्षस्यैका शाखा यदि विनता भवति पाण्डुरा वा स्यात् ।
विज्ञातव्यं शाखातले जलं त्रिपुरुषं खात्वा ॥ ५४ ॥
फलकुसुमविकारो यस्य तस्य पूर्वे शिरा त्रिभिः हस्तैः ।
भवति पुरुषैश्चतुर्भिः पाषाणोऽधः क्षितिः पीता ॥ ५५ ॥
यदि कण्टकारिका कण्टकैः विना दृश्यते सितैः कुसुमैः ।
तस्याः तलेऽंबु वाच्यं त्रिभिः नरैः अर्धपुरुषे च ॥ ५६ ॥
खर्जूरी द्विशिरस्का यत्र भवेज्जलविवर्जिते देशे ।
तस्याः पश्चिमभागे निर्देश्यं त्रिपुरुषैः (त्रिपुरुषे) वारि ॥ ५७ ॥
यदि भवति कर्णिकारः सितकुसुमः स्यात् पलाशवृक्षो वा ।
सव्येन तत्र हस्तद्वयेऽंबु पुरुषद्वये (पुरुषत्रये) भवति ॥ ५८ ॥
यस्याम् ऊष्मा (ऊष्मा यस्यां) धात्र्यां धूमो वा तत्र वारि नरयुगले (नरयुग्मे) ।
निर्देष्टव्या च शिरा महता तोयप्रवाहेण ॥ ५९ ॥
यस्मिन् क्षेत्रोद्देशे जातं सस्यं विनाशमुपयाति ।
स्निग्धमतिपाण्डुरं वा महाशिरा नरयुगे तत्र ॥ ६० ॥
मरुदेशे भवति शिरा यथा तथातः परं प्रवक्ष्यामि ।
ग्रीवा करभाणामिव भूतलसंस्थाः शिरा यान्ति ॥ ६१ ॥
पूर्वोत्तरेण पीलोः यदि वल्मीको जलं भवति पश्चात् ।
उत्तरगमना च शिरा विज्ञेया पंचभिः पुरुषैः ॥ ६२ ॥
चिह्नं दर्दुर आदौ मृत् कपिला तत्परं (मृत्कपिलातः परं) भवेद् धरिता ।
भवति च पुरुषे अधौ ऽश्मा तस्य तले ऽंभो विनिर्देष्यं (वारि निर्देच्यं) ॥ ६३ ॥
पीलोः एव प्राच्यां वल्मीकोऽतोऽर्धपंचमैः हस्तैः ।
दिशि याम्यायां तोयं वक्तव्यं सप्तभिः पुरुषैः ॥ ६४ ॥
प्रथमे पुरुषे भुजगः सितासितो हस्तमात्रमूर्तिश्च ।
दक्षिणतो वहति शिरा सक्षारं भूरि पानीयम् ॥ ६५ ॥
उत्तरतश्च करीरस्याहिगृहं (करीरादहिनिलये) दक्षिणे जलं स्वादु ।
दशभिः पुरुषैः ज्ञेयम् पुर्षे पीतोऽत्र मण्डूकः ॥ ६६ ॥
रोहीतकस्य पश्चादहिवासश्चेत् त्रिभिः करैः याम्ये ।
द्वादश पुरुषान् खात्वा सक्षारा पश्चिमेन शिरा ॥ ६७ ॥
इन्द्रतरोः वल्मीकः प्राग् दृश्यः पश्चिमे शिरा हस्ते ।
खात्वा चतुर्दश नरान् कपिला गोधा नरे प्रथमे ॥ ६८ ॥
यदि वा सुवर्णनाम्नः तरोः भवेद् वामतो भुजंगगृहम् ।
हस्तद्वये तु याम्ये पंचदशनरावसानेऽंबु ॥ ६९ ॥
क्षारं पयोऽत्र नकुलोऽर्धमानवे ताम्रसन्निभश्चाश्मा ।
रक्ता च भवति वसुधा वहति शिरा दक्षिणा तत्र ॥ ७० ॥
बदरीरोहितवृक्षौ संपृक्तौ चेद् विनापि वल्मीकम् ।
हस्तत्रयेऽंबु पश्चात् षोडशभिः मानवैः भवति ॥ ७१ ॥
सुरसं जलमादौ दक्षिणा शिरा वहति चौत्तनेणान्या ।
पिष्टनिभः पाषाणो मृत् श्वेता वृश्चिकोऽर्धनरे ॥ ७२ ॥
सकरीरा चेद् वदरी त्रिभिः करैः पश्चिमेन तत्रांभः ।

अष्टादशभिः पुरुषैः अशानी बहुजला च शिरा ॥ ७३॥
पीलुसमेता बदरी हस्तत्रयसम्मिते दिशि प्राच्याम् ॥ ७४॥
विंशत्या पुरुषाणामशोष्यमंभोऽत्र सक्षारम् ॥ ७५॥
ककुभकरीरावेकत्र संयुतौ यत्र ककुभविल्वौ (बिल्वौ) वा ।
हस्तद्वयेऽंबु पश्चान् नरैः भवेत् पंचविंशत्या ॥ ७६॥
वल्मीकमूर्धनि यदा दूर्वा च कुशाश्च पाण्डुराः सन्ति ।
कूपो मध्ये देयो जलमत्र नरैकविंशत्या ॥ ७७॥
भूमिः कदंबकयुता (भूमी कदंबकयुता, भूमीकदंबकयुता)
वल्मीके यत्र दृश्यते दूर्वा ।
हस्तद्वयेन (हस्तत्रयेन) याम्ये नरैः जलं पंचविंशत्या ॥
७८॥
वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति ।
नानावृक्षैः सहितः त्रिभिः जलं तत्र वक्तव्यम् ॥ ७९॥
हस्तचतुष्के मध्यात् षोडशभिश्चांगुलैरुदग् वारि ।
चत्वारिंशत् पुरुषान् खात्वा ऽश्माऽधः (अश्मातः) शिरा
भवति ॥ ८०॥
ग्रन्थिप्रचुरा यस्मिन् शमी भवेदुत्तरेण वल्मीकः ।
पश्चात् पंचकरान्ते शतार्धसंख्यैः नरैः सलिलम् ॥ ८१॥
एकस्थाः पंच यदा वल्मीका मध्यमो भवेत्श्वेतः ।
तस्मिन् शिरा प्रदिष्टा नरषष्ट्या पंचवर्जितया ॥ ८२॥
सपलाशा यत्र शमी पश्चिमभागेऽंबु मानवैः षष्ट्या ।
अर्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः ॥ ८३॥
वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद् यस्मिन् ।
पूर्वेण हस्तमात्रे सप्तत्या मानवैः अंबु ॥ ८४॥
श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः ।
नरपंचकसंयुतया सप्तत्याहिः नरार्धे च ॥ ८५॥
मरुदेशे यच्चिह्नं न जांगले तैः जलं विनिर्देश्यम् ।
जंबूवेतसपूर्वैः (पूर्वे) ये पुरुषाः ते मरौ द्विगुणाः ॥ ८६॥
जंबूः त्रिवृता मौर्वी (मूर्वा) शिशुमारी सारिवा शिवा
श्यामा ।
वीरुधयो वाराही ज्योतिष्मती गरुडवेगा च (च गरुडवेगा)
॥ ८७॥
सूकरिकमाषपर्णीव्याघ्रपदाश्चेति यद्यहेः निलये ।
वल्मीकादुत्तरतः त्रिभिः करैः त्रिपुरुषे तोयम् ॥ ८८॥
एतदनूपे वाच्यं जांगलभूमौ तु पंचभिः पुरुषैः ।
एतैः एव निमित्तैः मरुदेशे सप्तभिः कथयेत् ॥ ८९॥
एकनिभा यत्र मही तृणतरुवल्मीकगुल्मपरिहीना ।
तस्यां यत्र विकारो भवति धरित्र्यां जलं तत्र ॥ ९०॥
यत्र स्निग्धा निम्ना सवालुका सानुनादिनी वा स्यात् ।
तत्र अर्धपंचकैः (अर्धपंचमैः) वारि मानवैः पंचभिः यदि वा
॥ ९१॥
स्निग्धतरूणां याम्ये नरैश्चतुर्भिः जलं प्रभूतं च ।
तरुगहनेऽपि हि विकृतो यः तस्मात् तद्वदेव वदेत् ॥ ९२॥
नमते यत्र धरित्री सार्धे पुरुषेऽंबु जांगलानूपे ।
कीटा वा यत्र विनालयेन बह्वोऽंबु तत्रापि ॥ ९३॥
उष्णा शीता च मही शीतोष्णांभः त्रिभिः नरैः सार्धैः ।
इन्द्रधनुः मत्स्यो वा वल्मीको वा चतुर्हस्तात् ॥ ९४॥
वल्मीकानां पंक्त्यां यद्येकोऽभ्युच्छ्रितः शिरा तदधः ।
शुष्यति न रोहते वा सस्यं यस्यां च तत्रांभः ॥ ९५॥
न्यग्रोधपलाशौदुंबरैः समेतैः त्रिभिः जलं तदधः ।
वटपिप्पलसमवाये तद्वद् वाच्यं शिरा चौदक् ॥ ९६॥
आग्नेये यदि कोणे ग्रामस्य पुरस्य वा भवेत् (भवति) कूपः
।
नित्यं स करोति भयं दाहं च समानुषं प्रायः ॥ ९७॥
नैरृतकोणे बालक्षयं च वनिताभयं (वनिताभयं) च वायव्ये ।
दिक्त्रयमेतत् त्यक्त्वा शेषासु शुभावहाः कूपाः ॥ ९८॥
सारस्वतेन मुनिना दकार्गकं (दगारगलं) यत् कृतं
तदवलोक्य ।
आर्याभिः कृतमेतद् वृत्तैः अपि मानवं वक्ष्ये ॥ ९९॥
स्निग्धा यतः पादपगुल्मवल्ल्यो
निश्छिद्रपत्राश्च ततः शिरास्ति ।
पद्मक्षुरौशीरकुलाः सगुण्ड्राः
काशाः कुशा वा नलिका नलो वा ॥ १००॥
खर्जूरजंबू अर्जुनवेतसाः स्युः
क्षीरान्विता वा द्रुमगुल्मवल्ल्यः ।
छत्रैभनगाः शतपत्रनीपाः
स्युः नक्तमालाश्च ससिन्दुवाराः ॥ १०१॥
विभीतको वा मदयन्तिका वा
यत्रास्ति तस्मिन् पुरुषत्रयेऽंभः ।
स्यात् पर्वतस्यौपरि पर्वतोऽन्यः
तत्रापि मूले पुरुषत्रयेऽंभः ॥ १०२॥
या मौञ्जिकैः (मौञ्जकैः) काशकुशैश्च युक्ता
नीला च मृद्यत्र सशर्करा च ।
तस्यां प्रभूतं सुरसं च तोयं
कृष्णाथवा यत्र च रक्तमृद् वा ॥ १०३॥
सशर्करा ताम्रमही कषायं
क्षारं धरित्री कपिला करोति ।
आपाण्डुरायां लवणं प्रदिष्टं
मृष्टं (मिष्टं) पयो नीलवसुन्धरायाम् ॥ १०४॥
शाकाश्वकर्णार्जुनविल्व (बिल्व) सर्जाः
श्रीपर्ण्यरिष्टाधवशिंशपाश्च ।
छिद्रैश्च पत्रैः (पर्णैः) द्रुमगुल्मवल्ल्यो
रूक्षाश्च दूरेऽंबु निवेदयन्ति ॥ १०५॥
सूर्याग्निभस्मौष्ट्रखरानुवर्णा
या निर्जला सा वसुधा प्रदिष्टा ।
रक्तांकुराः क्षीरयुताः करीरा
रक्ता धरा चेज्जलमश्मनोऽधः ॥ १०६॥
वैदूर्यमुद्ग (वैडूर्यमुद्ग)अंबुदमेचकाभा
पाकौन्मुखौदुंबरसन्निभा वा ।
भंग (भृग्ग)अञ्जनाभा कपिलाथवा या
ज्ञेया शिला भूरिसमीपतोया ॥ १०७॥
पारावत (परावत) क्षौद्रघृतौपमा या (वा)

क्षौमस्य वस्त्रस्य च तुल्यवर्णा ।
या सोमवल्ल्याश्च समानरूपा
साप्याशु तोयं कुरुतेऽक्षयं च ॥ १०८ ॥
ताम्रैः समेता पृषतैः विचित्रैः
आपाण्डुभस्मौष्ट्रखरानुरूपा ।
भृंगौपमांगुष्ठिकपुष्पिका वा
सूर्याग्निवर्णा च शिला वितोया ॥ १०९ ॥
चन्द्रातपस्फटिकमौक्तिकहेमरूपा
याश्चेन्द्रनीलमणिहिंगुलुकाञ्जनाभाः ।
सूर्योदयांशुहरितालनिभाश्च याः स्युः
ताः शोभना मुनिवचोऽत्र च वृत्तमेतत् ॥ ११० ॥
एता ह्यभेद्याश्च शिलाः शिवाश्च
यक्षैश्च नागैश्च सदाभिजुष्टाः ।
येषां च राष्ट्रेषु भवन्ति राज्णां
तेषामवृष्टिः न भवेत् कदाचित् ॥ १११ ॥
भेदं यदा नैति शिला तदानीं
पलाशकाष्ठैः सह तिन्दुकानाम् ।
प्रज्वालयित्वानलमग्निवर्णा
सुधांबुसिक्ता प्रविदारमेति ॥ ११२ ॥
तोयं श्रितं (शृतं) मोक्षकभस्मना वा
यत् सप्तकृत्वः परिषेचनं तत् ।
कार्यं शरक्षारयुतं शिलायाः
प्रस्फोटनं वह्निवितापितायाः ॥ ११३ ॥
तक्रकाञ्जिकसुराः सकुलत्था
योजितानि बदराणि च तस्मिन् ।
सप्तरात्रमुषितानि अभितप्तां
दारयन्ति हि शिलां परिषेकैः ॥ ११४ ॥
नैंबं पत्रं त्वक् च नालं तिलानां
सापामार्गं तिन्दुकं स्याद् गुडूची ।
गोमूत्रेण स्रावितः क्षार एषां
षट्कृत्वोऽतः तापितो भिद्यतेऽश्मा ॥ ११५ ॥
आर्कं पयो हुडुविषाणमषीसमेतं
पारावताखुशकृता च युतः प्रलेपः ।
टंकस्य तैलमथितस्य ततोऽस्य पानं
पश्चात्शितस्य न शिलासु भवेद् विघातः ॥ ११६ ॥
क्षारे कदल्या मथितेन युक्ते (यक्ते)
दिनोषिते पायितमायसं यत् ।
सम्यक् शितं (छितं) चाश्मनि नैति भंगं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥ ११७ ॥
पाली प्रागपरायतांबु सुचिरं धत्ते न याम्योत्तरा
कल्लोलैः अवदारमेति मरुता सा प्रायशः प्रेरितैः ।
तां चेदिच्छति सारदारुभिः अपां संपातमावारयेत् ।
पाषाणादिभिः एव वा प्रतिचयं क्षुण्णं (क्षुन्नं) द्विपाश्वादिभिः
॥ ११८ ॥
ककुभवटाम्रप्लक्षकदंबैः सनिचुलजंबूवेतसनीपैः ।
कुरबक (कुरवाक) तालाशोकमधूकैः
बकुलविमिश्रैश्चावृएततीराम् ॥ ११९ ॥
द्वारं च नैर्वाहिकमेकदेशे
कार्यं शिलासंचितवारिमार्गम् ।
कोशस्थितं निर्विवरं कपाटं
कृत्वा ततः पांशुभिः आवपेत् तम् ॥ १२० ॥
अञ्जनमुस्तौशीरैः सराजकोशातकामलकचूर्णैः ।
कतकफलसमायुक्तैः योगः कूपे प्रदातव्यः ॥ १२१ ॥
कलुषं कटकं (कतुकं) लवणं विरसं
सलिलं यदि वा शुभगन्धि भवेत् ।
तदनेन भवत्यमलं सुरसं
सुसुगन्धि गुणैः अपरैश्च युतम् ॥ १२२ ॥
हस्तो मघानुराधापुष्यधनिष्ठौत्तराणि रोहिण्यः ।
शतभिषग् इत्यारंभे कूपानां शस्यते भगणः ॥ १२३ ॥
कृत्वा वरुणस्य बलिं वटवेतसकीलकं शिरास्थाने ।
कुसुमैः गन्धैः धूपैः संपूज्य निधापयेत् प्रथमम् ॥ १२४ ॥
/एअत्नुम(५४ १२५अब मेघोद्भवं प्रथममेव मया प्रदिष्टं
ज्येष्ठामतीत्य बलदेवमतादि दृष्ट्वा ।
भौमं दगार्गलमिदं कथितं द्वितीयं सम्यग्वराहमिहिरेण
मुनिप्रसादात ॥ १२५ ॥)

---

अध्याय ५४ वृक्षायुर्वेदाध्यायः
प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः ।
यस्मादतो जलप्रान्तेष्वारामान् विनिवेशयेत् ॥ १ ॥
मृद्वी भूः सर्ववृक्षाणां हिता तस्याम् तिलान् वपेत् ।
पुष्पितां तांश्च मृद्नीयात् (गृह्णीयात्) कर्मएतत् प्रथमं भुवः
(भुवि) ॥ २ ॥
अरिष्टाशोकपुन्नागशिरीषाः सप्रियंगवः ।
मंगल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥ ३ ॥
पनसाशोककदलीजंबूलकुचदाडिमाः ।
द्राक्षापालीवताश्चएव बीजपूरातिमुक्तकाः ॥ ४ ॥
एते द्रुमाः काण्डरोप्या (काण्डारोप्या) गोमयेन प्रलेपिताः ।
मूलोच्छेदेऽथवा स्कन्धे रोपणीयाः परं ततः (प्रयत्नतः) ॥
५ ॥
अजातशाखान् शिशिरे जातशाखान् हिमागमे ।
वर्षागमे च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत् (यथादिक्
प्रतिरोपयेत्) ॥ ६ ॥
घृतौशीरतिलक्षौद्रविडंगक्षीरगोमयैः ।
आमूलस्कन्धलिप्तानां संक्रामणविरोपणम् ॥ ७ ॥
शुचिः भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः ।
रोपयेद् रोपितश्चैव पत्रैः तैः एव जायते ॥ ८ ॥
सायं प्रातश्च घर्मऋतौ (घर्मान्ते) शीतकाले दिनान्तरे ।
वर्षासु च भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥ ९ ॥
जंबूवेतसवानीरकदंबौदुंबरार्जुनाः ।
बीजपूरकमृद्वीकालकुचाश्च सदाडिमाः ॥ १० ॥
वञ्जुलो नक्तमालश्च तिलकः पनसः तथा ।
तिमिरोऽम्रातकश्चैति (चैव) षोडशानूपजाः स्मृताः ॥ ११ ॥

उत्तमं विंशतिः हस्ता मध्यमं षोडशान्तरम् ।
स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥१२॥
अभ्यासजाताः तरवः संस्पृशन्तः परस्परम् ।
मिश्रैः मूलैश्च न फलं सम्यग् यच्छन्ति पीडिताः ॥१३॥
शीतवातातपै रोगो जायते पाण्डुपत्रता ।
अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः ॥१४॥
चिकित्सितमथएतेषां शस्त्रेणादौ विशोधनम् ।
विडंगघृतपंकातान् सेचयेत् क्षीरवारिणा ॥१५॥
फलनाशे कुलत्थैश्च माषैः मुद्गैः तिलैः यवैः ।
शृतशीतपयःसेकः फलपुष्पसमृद्धये (अभिवृद्धये) ॥१६॥
अविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् ।
सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥१७॥
सप्तरात्रौषितैः एतैः सेकः कार्यो वनस्पतेः ।
वल्मीगुल्मलतानां च फलपुष्पाय सर्वदा ॥१८॥
वासराणि दश दुग्धभावितं
बीजमाज्ययुतहस्तयोजितम् ।
गोमयेन बहुशो विरूक्षितं
क्रौडमार्गपिशितैश्च धूपितम् ॥१९॥
मांस (मत्स्य) सूकरवसासमन्वितं रोपितं च
परिकर्मितावनौ ।
क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥२०॥
तिन्तिडीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः ।
पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥२१॥
कपित्थवल्लीकरणाय मूलान्यस्
आस्फोतधात्रीधववासिकानाम् ।
पलाशिनी वेतससूर्यबल्ली (वल्ली)
श्यामातिमुक्तैः सहिताष्टमूली ॥२२॥
क्षारे शृते चाप्यनया सुशीते
ताला (नाला) शतं स्थाप्य कपित्थबीजम् ।
दिने दिने शोषितमर्कपादैः
मासं विधिः त्वेष ततोऽधिरोप्यम् ॥२३॥
हस्तायतं तद्द्विगुणं गभीरं
खात्वावटं प्रोक्तजलावपूर्णम् ।
शुष्कं प्रदग्धं मधुसर्पिषा तत्
प्रलेपयेद् भस्मसमन्वितन (समन्वितेन) ॥२४॥
चूर्णीकृतैः माषतिलैः यवैश्च
प्रपूरयेद् मृत्तिकयान्तरस्थैः ।
मत्स्यामिषांभः (अंभः) सहितं च हन्याद्
यावद् घनत्वं समुपागतं तत् ॥२५॥
उप्तं च बीजं चतुरंगुलाधो
मत्स्यांभसा मांसजलैश्च सिक्तम् ।
वल्ली भवत्याशु शुभप्रवाला
विस्मापनी मण्डपमावृणोति ॥२६॥
शतशो अंकोल (अग़कोल्ल) संभूतफलकल्केन भावितम् ।
एतत् तैलेन वा बीजं श्लैष्मातक (श्लेष्मातक) फेन वा ॥
२७॥
वापितं करकौन्मिश्रमृदि तत्क्षणजन्मकम् ।
फलभारान्विता शाखा भवतीति किमद्भुतम् ॥२८॥
श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः ।
अंकोल (अग़कोल्ल) विज्जलाद्भिश्छायायां सप्तकृत्वा
(सप्तकृत्व)एवम् ॥२९॥
माहिषगोमयघृष्टानि अस्य करीषे च तानि निक्षिप्य ।
करकाजलमृद्योगे न्युप्तानि अह्ना फलकराणि ॥३०॥
ध्रुवमृदुमूलविशाखा गुरुभं श्रवणः तथाश्विनी हस्तः (हस्तं) ।
उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥३१॥

---

अध्याय ५५ प्रासादलक्षणाध्यायः

कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च ।
देवतायतनं कुर्याद् यशोधर्माभिवृद्धये ॥१॥
इष्टापूर्तेन लभ्यन्ते ये लोकाः तान् बुभूषता ।
देवानामालयः कार्यो द्वयमपि अत्र दृश्यते ॥२॥
सलिलौद्यानयुक्तेषु कृतेष्वकृतेषु च ।
स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः ॥३॥
सरःसु नलिनीछत्रनिरस्तरविरश्मिषु ।
हंसांसाक्षिप्तकह्लारवीथी (वीची, वीथी) विमलवारिषु ॥
४॥
हंसकारण्डवक्रौंचचक्रवाकविराविषु ।
पर्यन्तनिचुलच्छायाविश्रान्तजलचारिषु ॥५॥
क्रौंचकांचीकलापाश्च कलहंसकलस्वराः (स्वनाः) ।
नद्यः तोयांशुका यत्र शफरीकृतमेखलाः ॥६॥
फुल्लतीरद्रुमौत्तंसाः संगमश्रोणिमण्डलाः ।
पुलिनाभ्युन्नतौरस्या हंसवासाः (हंसहासाः) च निम्नगाः ॥
७॥
वनौपान्तनदीशैलनिर्झरौपान्तभूमिषु ।
रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च ॥८॥
भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ।
ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥९॥
चतुःषष्टिपदं कार्यं देवतायतनं सदा ।
द्वारं च मध्यमं तस्मिन् (तत्र) समदिक्स्थं प्रशस्यते ॥१०॥
यो विस्तारो भवेद् यस्य द्विगुणा तत्समुन्नतिः ।
उच्छ्रायाद् यः तृतीयांशः तेन तुल्या कटिः स्मृता (कटिः
भवेत्) ॥११॥
विस्तारार्धं भवेद् गर्भो भित्तयोऽन्याः समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥१२॥
उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुदुंबरः ।
विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥१३॥
त्रिपंचसप्तनवभिः शाखाभिः तत् प्रशस्यते ।
अधः शाखाचतुर्भागे प्रतीहारौ निवेशयेत् ॥१४॥
शेषं मंगल्यविहगैः श्रीवृक्षैः स्वस्तिकैः (श्रीवृक्षस्वस्तिकैः)
घटैः ।
मिथुनैः पत्रवल्लीभिः प्रमथैश्चौपशोभयेत् ॥१५॥
द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका ।
द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका ॥१६॥

मेरुमन्दरकैलासविमानच्छन्दनन्दनाः ।
समुद्गपद्मगरुडनन्दिवर्धनकुञ्जराः ॥१७॥
गुहराजो वृषो हंसः सर्वतोभद्रको घटः ।
सिंहो वृत्तश्चतुष्कोणः षोडशाष्टाश्रयः तथा ॥१८॥
इत्येते विंशतिः प्रोक्ताः प्रासादाः संज्ञया मया ।
यथोक्तानुक्रमेणैव लक्षणानि वदाम्यतः ॥१९॥
तत्र षडश्रिः मेरुः द्वादशभौमो विचित्रकुहरश्च ।
द्वारैः युतश्चतुर्भिः द्वात्रिंशद्धस्तविस्तीर्णः ॥२०॥
त्रिंशद्धस्तायामो दशभौमो मन्दरः शिखरयुक्तः ।
कैलासोऽपि शिखरवान् अष्टाविंशोऽष्टभौमश्च ॥२१॥
जालगवाक्षकयुक्तो विमानसंज्ञः त्रिसप्तकायामः ।
नन्दन इति षड्भौमो द्वात्रिंशः षोडशाण्डयुक्तः ॥२२॥
वृत्तः समुद्गनामा पद्मः पद्माकृतिः शया अष्टौ (शयानाष्टौ) ।
शृंगेणैकेन भवेदेकैव च भूमिका तस्य ॥२३॥
गरुडाकृतिश्च गरुडो नन्दीति च षट्चतुष्कविस्तीर्णः ।
कार्यः तु (च) सप्तभौमो विभूषितोऽण्डैः तु (च) विंशत्या ॥ २४॥
कुञ्जर इति गजपृष्ठः षोडशहस्तः समन्ततो मूलात् ।
गुहराजः षोडशकः त्रिचन्द्रशाला भवेद् वलभी ॥२५॥
वृष एकभूमिशृंगो द्वादशहस्तः समन्ततो वृत्तः ।
हंसो हंसाकारो घटोऽष्टहस्तः कलशरूपः ॥२६॥
द्वारैः युतश्चतुर्भिः बहुशिखरो भवति सर्वतोभद्रः ।
बहुरुचिरचन्द्रशालः षड्विंशः पंचभौमश्च ॥२७॥
सिंहः सिंहाक्रान्तो द्वादशकोणोऽष्टहस्तविस्तीर्णः ।
चत्वारोऽञ्जनरूपाः पंचाण्डयुतः तु चतुरस्रः (चतुरश्रः) ॥ २८॥
भूमिकांगुलमानेन मयस्याष्टोत्तरं शतम् ।
सार्धं हस्तत्रयं चैव कथितं विश्वकर्मणा ॥२९॥
प्राहुः स्थपतयश्चात्र मतमेकं विपश्चितः ।
कपोतपालिसंयुक्ता न्यूना गच्छन्ति तुल्यताम् ॥३०॥
प्रासादलक्षणमिदम् कथितं समासाद्
गर्गेण यद् विरचितं तदिहास्ति सर्वम् ।
मनुआदिभिः विरचितानि पृथूनि यानि
तत्संस्पृशन् (तत्सस्मृतिं) प्रति मयात्र कृतोऽधिकारः ॥३१॥

---

अध्याय ५६ वज्रलेपलक्षणाध्यायः
आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः ।
बीजानि शल्लकीनां धन्वनवल्को वचा चैति ॥१॥
एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च ।
अवतार्योऽस्य च कल्को द्रव्यैः एतैः समनुयोज्यः ॥२॥
श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः ।
अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥३॥
प्रासादहर्म्यवलभीलिंगप्रतिमासु कुड्यकूपेषु ।
सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥४॥
लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि ।
नागफलनिंब (बलाफल) तिन्दुकमदनफलमधूकमञ्जिष्ठाः ॥ ५॥
सर्जरसरसामलकानि चैति कल्कः कृतो द्वितीयोऽयम् ।
वज्राख्यः प्रथमगुणैः अयमपि तेष्वेव कार्येषु ॥६॥
गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च ।
निंबकपित्थरसैः सह वज्रतलो (वज्रतरो) नाम कल्कोऽन्यः ॥७॥
अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः ।
मयकथितो योगोऽयं विज्ञेयो वज्रसंघातः ॥८॥

---

अध्याय ५७ प्रतिमालक्षणाध्यायः ।
जालान्तरगे भानौ यदणुतरं दर्शनं रजो याति ।
तद् विन्द्यात् परमाणुं प्रथमं तद्धि प्रमाणानाम् ॥१॥
परमाणुरजो बालाग्र (वालाग्र) लिक्षयूकं (यूका) यवो अंगुलं चैति ।
अष्टगुणानि यथोत्तरमंगुलमेकं भवति संख्या (मात्रा) ॥२॥
देवागारद्वारस्याष्टांशोनस्य यः तृतीयोऽंशः ।
तत्पिण्डिकाप्रमाणं प्रतिमा तद्द्विगुणपरिमाणा ॥३॥
स्वैः अंगुलप्रमाणैः द्वादश वीस्तीर्णं (विस्तीर्णं) आयतं च मुखम् ।
नग्नजिता तु चतुर्दश दैर्घ्येण द्राविडं कथितम् ॥४॥
नासाललाटचिबुकग्रीवाश्चतुरांगुलाः तथा कर्णौ ।
द्वे अंगुले च हनुनी (हनुके) चिबुकं च द्व्यंगुलं विततं (विस्तृतं) ॥५॥
अष्टांगुलं ललाटं विस्ताराद् द्व्यंगुलात् परे शंखौ ।
चतुरंगुलौ तु शंखौ कर्णौ तु द्व्यंगुलौ (द्व्यग्गुलं) पृथुलौ ॥ ६॥
कर्णोपान्तः कार्योऽर्धपंचमे भ्रूसमेन सूत्रेण ।
कर्णस्रोतः सुकुमारकम् च नेत्र (नयन) प्रबन्धसमम् ॥७॥
चतुरंगुलं वसिष्ठः कथयति नेत्रान्तकर्णयोः विवरम् ।
अधरो अंगुलप्रमाणः तस्यार्धेनोत्त्रोष्ठश्च ॥८॥
अर्धांगुला तु गोच्छा वक्त्रं चतुरंगुलायतं कार्यम् ।
विपुलं तु सार्धमंगुलम् अव्यात्तं त्र्यंगुलं (अध्यात्तत्त्यग्गुलं) व्यात्तम् ॥९॥
द्व्यंगुलतुल्यौ नासापुटौ च नासा पुटाग्रतो ज्ञेया ।
स्याद् द्व्यंगुलमुच्छ्रायश्चतुरंगुलमन्तरं चाक्ष्णोः ॥१०॥
द्व्यंगुलमितोऽक्षिकोशो द्वे नेत्रे तत्त्रिभागिका तारा ।
दृक्तारा पंचांशो नेत्रविकाशो अंगुलं भवति ॥११॥
पर्यन्तात् पर्यन्तं दश भ्रुवोऽर्धांगुलं भ्रुवोः लेखा ।
भ्रूमध्यं द्व्यंगुलकं भूः धैर्घ्येणांगुलचतुष्कम् ॥१२॥
कार्या तु केशरेखा भ्रूबन्धसमांगुलार्धविस्तीर्णा ।
नेत्रान्ते करवीरकमुपन्यसेदनुगुलप्रमितम् ॥१३॥
द्वात्रिंशत् परिणाहागतुर्दशायामतो अंगुलानि शिरः ।
द्वादश तु चित्रकर्मणि दृश्यन्ते विंशतिः अदृश्याः ॥१४॥
आस्यं सकेशनिचयं षोडश दैर्घ्येण नग्निजित् (नग्नजित्) प्रोक्तम् ।
ग्रीवा दश विस्तीर्णा परिणाहाद् विंशतिः सैका ॥१५॥
कण्ठाद् द्वादश हृदयं हृदयान् नाभी (नाभिः) च तत्प्रमाणेन ।

नाभीमध्याद् मेढ्रान्तरं च तत्तुल्यमेवोक्तम् ॥ १६ ॥
ऊरू चांगुलमानैश्चतुर्युता विंशतिः तथा जंघे ।
जानुकपिच्छे चतुरंगुले च पादौ च तत्तुल्यौ ॥ १७ ॥
द्वादशदीर्घौ षट पृथुतया च पादौ त्रिकायतांगुष्ठौ ।
पंचांगुलपरिणाहौ प्रदेशिनी त्र्यंगुलं दीर्घा ॥ १८ ॥
अष्टानंशांशोनाः शेषांगुल्यः (शेषाग्गुलयः) क्रमेण कर्तव्याः
।
सचतुर्थभागमंगुलमुत्सेधो अंगुष्ठकस्यौक्तः ॥ १९ ॥
अंगुष्ठनखः कथितः चतुर्थभागोनमंगुलं तज्ञैः ।
शेषनखानामर्धांगुलं क्रमात् किंचिदूनं वा ॥ २० ॥
जंघाग्रे परिणाहश्चतुर्दशोक्तः तु विस्तरात् (विस्तरः) पंच ।
मध्ये तु सप्त विपुला परिणाहात् त्रिगुणिताः सप्त ॥ २१ ॥
अष्टौ तु जानुमध्ये वैपुल्यं त्र्यष्टकं तु परिणाहः ।
विपुलौ चतुर्दश ऊरू मध्ये द्विगुणश्च तत्परिधिः ॥ २२ ॥
कटिः अष्टादश विपुला चत्वारिंशगतुर्युता परिधौ ।
अंगुलमेकं नाभी (नाभिः) वेधेन तथा प्रमाणेन ॥ २३ ॥
चत्वारिंशदि्द्वयुता नाभीमध्येन मध्यपरिणाहः ।
स्तनयोः षोडश चान्तरमूर्ध्वं कक्ष्ये (कक्षे) षडंगुलिके ॥ २४ ॥
अष्टावंसौ द्वादश बाहू कार्यौ (कार्यावष्टावंसौ द्वादश बाहू)
तथा प्रबाहू च ।
बाहू षड्विस्तीर्णौ (षड्विस्तिर्णौ) प्रतिबाहू त्वंगुलचतुष्कम्
॥ २५ ॥
षोडश बाहू मूले परिणाहाद् द्वादशाग्रहस्ते च ।
विस्तारेण करतलं षडंगुलं सप्त दैर्घ्येण ॥ २६ ॥
पंचांगुलानि मध्या प्रदेशिनी मध्यपर्वदलहीना ।
अनया तुल्या चानामिका कनिष्ठा तु पर्वोना ॥ २७ ॥
पर्वद्वयमंगुष्ठः शेषांगुल्यः (शेषाग्गुलयः) त्रिभिः त्रिभिः
कार्याः ।
नखपरिमाणं कार्यं सर्वासाम् पर्वणोऽर्धेन ॥ २८ ॥
देशानुरूपभूषणवेषालंकारमूर्तिभिः कार्या ।
प्रतिमा लक्षणयुक्ता सन्निहिता वृद्धिदा भवति ॥ २९ ॥
दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम् ।
द्वादशहान्या शेषाः प्रवरसमन्यूनपरिमाणाः ॥ ३० ॥
(विष्णु)
कार्योऽष्टभुजो भगवांश्चतुर्भुजो द्विभुज एव वा विष्णुः ।
श्रीवत्सांकितवक्षाः कौस्तुभमणिभूषितोरस्कः ॥ ३१ ॥
अतसीकुसुमश्यामः पीतांबरनिवसनः प्रसन्नमुखः ।
कुण्डलकिरीटधारी पीनगलौरःस्थलांसभुजः ॥ ३२ ॥
खड्गगदाशरपाणिः दक्षिणतः शान्तिदश्चतुर्थकरः ।
वामकरेषु च कार्मुकखेटकचक्राणि शंखश्च ॥ ३३ ॥
अथ च चतुर्भुजमिच्छति शान्तिद एको गदाधरश्चान्यः ।
दक्षिणपार्श्वे त्व (हि) एवं वामे शंखश्च चक्रं च ॥ ३४ ॥
द्विभुजस्य तु शान्तिकरो दक्षिणहस्तोऽपरश्च शंखधरः ।
एवं विष्णोः प्रतिमा कर्तव्या भूतिमिच्छद्भिः ॥ ३५ ॥
(हलधर)
बलदेवो हलपाणिः मदविभ्रमलोचनश्च कर्तव्यः ।
विभ्रत् (बिभ्रत्) कुण्डकमेकं शंखेन्दुमृणालगौरतनुः (वपुः) ॥
३६ ॥
एकानंशा कार्या देवी बलदेवकृष्णयोः मध्ये ।
कटिसंस्थितवामकरा सरोजमितरेण चौद्वहती ॥ ३७ ॥
कार्या चतुर्भुजा या वामकराभ्यां सपुस्तकं कमलम् ।
द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रं च ॥ ३८ ॥
वामो ऽथवाष्टभुजायाः (वामेष्वष्टभुजायाः)
कमण्डलुश्चापमंबुजं शास्त्रम् ।
वरशरदर्पणयुक्ताः सव्यभुजाः साक्षसूत्राश्च ॥ ३९ ॥
शांबश्च गदाहस्तः प्रद्युम्नश्चापभृत् सुरूपश्च ।
अनयोः स्त्रियौ च कार्ये खेटकनिस्त्रिंशधारिण्यौ ॥ ४० ॥
(ब्रह्मा अन्द् कुमार)
ब्रह्मा कमण्डलुकरश्चतुर्मुखः पण्कजासनस्थश्च ।
स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च ॥ ४१ ॥
(इन्द्र)
शुक्लचतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्वम् ।
तिर्यग् ललाटसंस्थं तृतीयमपि लोचनं चिह्नम् ॥ ४२ ॥
(महेश्वर)
शंभोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमपि च
ऊर्ध्वम् ।
शूलं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम् ॥ ४३ ॥
(बुध)
पद्मांकितकरचरणः प्रसन्नमूर्तिः सुनीचकेशश्च ।
पद्मासनौपविष्टः पिता इव जगतो भवति (भवेत्) बुद्धः ॥
४४ ॥
(अर्हत्)
आजानुलंबबाहुः श्रीवत्सांकः प्रशान्तमूर्तिश्च ।
दिग्वासाः तरुणो रूपवांश्च कार्योऽर्हतां देवः ॥ ४५ ॥
(भास्कर)
नासाललाटजंघ ऊरुगण्डवक्षांसि चौन्नतानि रवेः ।
कुर्यादुदीच्यवेषं गूढं पादादुरो यावत् ॥ ४६ ॥
बिभ्राणः स्वकररुहे बाहुभ्यां (पाणिभ्यां) पंकजे मुकुटधारी ।
कुण्डलभूषितवदनः प्रलंबहारो वियद्ग (वियग्ग) वृतः ॥
४७ ॥
कमलौदरद्युतिमुखः कंचुकगुप्तः स्मितप्रसन्नमुखः ।
रत्नौज्ज्वलप्रभामण्डलश्च कर्तुः शुभकरोऽर्कः ॥ ४८ ॥
सौम्या तु हस्तमात्रा वदुदा हस्तद्वयोच्छ्रिता प्रतिमा ।
क्षेमसुभिक्षाय भवेत् त्रिचतुर्हस्तप्रमाणा या ॥ ४९ ॥
नृपभयमत्यंगायां हीनांगायामकल्यता कर्तुः ।
शातौदार्यां क्षुद्भयमर्थविनाशः कृशांगुलायां (कृशायां च) ॥
५० ॥
मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशेत् कर्तुः ।
वामावनता पत्नीं दक्षिणविनता हिनस्त्यायुः ॥ ५१ ॥
अन्धत्वमूर्ध्वदृष्ट्या करोति चिन्तामधोमुखी दृष्टिः ।
सर्वप्रतिमास्वेवं शुभाशुभं भास्करोक्तसमम् ॥ ५२ ॥
लिंगस्य वृत्तपरधिं दैर्घ्येणासूत्र्य तत् त्रिधा विभजेत् ।

मूले तगतुरस्रं (चतुरश्रं) मध्ये त्वष्टाश्रिं वृत्तमतः ॥ ५३॥
चतुरस्रं (चतुरश्रं) अवनिखाते मध्यं कार्यं तु पिण्डिकाश्वभ्रे ।
दृश्यौच्छ्रायेण समा समन्ततः पिण्डिका (पिण्डका) श्वभ्रात् ॥ ५४॥
कृशदीर्घं देशघ्नं पार्श्वविहीनं पुरस्य नाशय ।
यस्य क्षतं भवेद् मस्तके विनाशाय तल्लिंगम् ॥ ५५॥
मातृगणः कर्तव्यः स्वनामदेवानुरूपकृतचिह्नः ।
रेवन्तोऽश्वारूढो मृगयाक्रीडादिपरिवारः ॥ ५६॥
(यम, वरुण, कुबेर)
दण्डी यमो महिषगो हंसारूढश्च पाशभृद् वरुनः ।
नरवाहनः कुबेरो वामकिरीटी बृहत्कुक्षिः ॥ ५७॥
प्रमथाधिपो गजमुखः प्रलंबजठरः कुठारधारी स्यात् ।
एकविषाणो बिभ्रन्मूलककन्दं सुनीलदलकन्दम ॥ ५८॥)

---

अध्याय ५८ वनसंप्रवेशाध्यायः
कर्तुः अनुकूलदिवसे दैवज्ञविशोधिते शुभनिमित्ते ।
मंगलशकुनैः प्रास्थानिकैश्च वनसंप्रवेशः स्यात् ॥ १॥
पितृवनमार्गसुरालयवल्मीकौद्यानतापसाश्रमजाः ।
चैत्यसरित्संगमसंभवाश्च घटतोयसिक्ताश्च ॥ २॥
कुब्जानुजातवल्लीनिपीडिता वज्रमारुतोपहताः ।
स्वपतितहस्तिनिपीडितशुष्काग्निप्लुष्टमधुनिलयाः ॥ ३॥
तरवो वर्जयितव्याः शुभदाः स्युः स्निग्धपत्रकुसुमफलाः ।
अभिमतवृक्षं गत्वा कुर्यात् पूजां सबलिपुष्पाम् ॥ ४॥
सुरदारुचन्दनशमीमधूकतरवः शुभा द्विजातीनाम् ।
क्षत्रस्यारिष्टाश्वत्थखदिरबिल्वा विवृद्धिकराः ॥ ५॥
वैश्यानां जीवकखदिरसिन्धुकस्यन्दनाः (स्पन्दनाः) च शुभफलदाः ।
तिन्दुककेसरसर्जार्जुनाम्रशालाश्च शूद्राणाम् ॥ ६॥
लिंगं वा प्रतिमा वा द्रुमवत् स्थाप्या यथा दिशं यस्मात् ।
तस्मागिह्नयितव्या दिशो द्रुमस्य ऊर्ध्वमथवाधः ।
परमान्नमोदकौदनदधिपललौल्लोपिकादिभिः भक्ष्यैः ।
मद्यैः कुसुमैः धूपरि गन्धैश्च तरुं समभ्यर्च्य ॥ ७॥
सुरपितृपिशाचराक्षसभुजगासुरगणविनायकाद्यानाम् ।
कृत्वा रात्रौ पूजां वृक्षं संस्पृश्य च ब्रूयात् ॥ ८॥
(मन्त्र)
अर्चार्थममुकस्य त्वं देवस्य परिकल्पितः ।
नमः ते वृक्ष पूजेयं विधिवत् संप्रगृह्यताम् ॥ ९॥
यानीह भूतानि वसन्ति तानि
बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
अन्यत्र वासं परिकल्प्यन्तु
क्षमन्तु तानि अद्य नमोऽस्तु तेभ्यः ॥ १०॥
वृक्षं प्रभाते सलिलेन सिक्त्वा
पूर्वोत्तरस्यां दिशि सन्निकृत्य ।
मध्वाज्यदिग्धेन (लिप्तेन) कुठारकेण
प्रदक्षिणं शेषमतो निहन्यात् (ऽभिहन्यात्) ॥ ११॥
पूर्वेण पूर्वोत्तरतोऽथवा उदक्
पतेद् यदा वृद्धिकरः तदा स्यात् ।
आग्नेयकोणात् क्रमशोऽग्निदाह-
रुग्राग (क्षुद्रोग) रोगाः तुरगक्षयश्च ॥ १२॥
यन् नौक्तमस्मिन् वनसंप्रवेशे
निपातविच्छेदनवृक्षगर्भाः ।
इन्द्रध्वजे वास्तुनि च प्रदिष्टाः
पूर्वं मया तेऽत्र तथैव योज्याः ॥ १३॥

---

अध्याय ५९ प्रतिमाप्रतिष्ठापनाध्यायः
दिशि याम्यायां (सौम्यायां) कुर्यादधिवासनमण्डपं बुधः प्राग् वा ।
तोरणचतुष्टययुतं शस्तद्रुमपल्लवच्छन्नम् ॥ १॥
पूर्वे भागे चित्राः स्रजः पताकाश्च मण्डपस्यौक्ताः ।
आग्नेय्यांदिशि रक्ताः कृष्णाः स्युः याम्यनैरृत्योः (नैरृतयोः) ॥ २॥
श्वेता दिश्यपरस्याम् वायव्यायां तु पाण्डुरा एव ।
चित्राश्चौत्तरपार्श्वे पीताः पूर्वोत्तरे कार्याः (कोणे) ॥ ३॥
आयुःश्रीबलजयदा दारुमयी मृण्मयी (मृन्मयी) तथा प्रतिमा ।
लोकहिताय मणिमयी सौवर्णी पुष्टिदा भवति ॥ ४॥
रजतमयी कीर्तिकरी प्रजाविवृद्धिं करोति ताम्रमयी ।
भूलाभं तु महान्तं शैली प्रतिमाथवा लिंगम् ॥ ५॥
शंखूपहता प्रतिमा प्रधानपुरुषं कुलं च घातयति ।
श्वभ्रोपहता रोगान् उपद्रवांश्च क्षयं (अक्षयान्) कुरुते ॥ ६॥
मण्डपमध्ये स्थण्डिलमुपलिप्यास्तीर्य सिकतयाथ कुशैः ।
भद्रासनकृतशीर्षौपधानपादां न्यसेत् प्रतिमाम् ॥ ७॥
प्लक्षाश्वत्थौदुंबरशिरीषवटसंभवैः कषायजलैः ।
मंगल्यसंज्ञिताभिः सर्वौषधिभिः कुशाद्याभिः ॥ ८॥
द्विपवृषभौद्धत (उद्धृत) पर्वतवल्मीकसरित्समागमतटेषु ।
पद्मसरःसु च मृद्भिः सपंचगव्यैश्च तीर्थजलैः ॥ ९॥
पूर्वशिरस्कां स्नातां सुवर्णरत्नांबुभिश्च ससुगन्धैः ।
नानातूर्यनिनादैः पुण्याहैः वेदनिर्घोषैः ॥ १०॥
एन्द्र्यां दिशीन्द्रलिंगा मन्त्राः प्राग्दक्षिणेऽग्निलिंगाश्च ।
वक्तव्या (जप्तव्या) द्विजमुख्यैः पूज्याः ते दक्षिणाभिश्च ॥ ११॥
यो देवः संस्थाप्यः तन्मन्त्रैश्चानलं द्विजो जुहुयात् ।
अग्निनिमित्तानि मया प्रोक्तानीन्द्रध्वजौत्थाने (उच्छ्राये) ॥ १२॥
धूमाकुलोऽपसव्यो मुहुर्मुहुः विफुलिंगकृन् न शुभः ।
होतुः स्मृतिलोपो वा प्रसर्पणं चाशुभं प्रोक्तम् ॥ १३॥
स्नातामभुक्तवस्त्रां स्वलंकृतां पूजिताम् कुसुमगन्धैः ।
प्रतिमां स्वास्तीर्णायाम् शय्यायाम् स्थापकः कुर्यात् ॥ १४॥
सुप्तां सगीतनृत्यैः जागरणैः (सुनृत्यगीतैः जागरकैः) सम्यग् एवमधिवास्य ।
दैवज्ञसंप्रदिष्टे काले संस्थापनं कुर्यात् ॥ १५॥
अभ्यर्च्य कुसुमवस्त्रानुलेपनैः शंखतूर्यनिर्घोषैः ।
प्रादक्षिण्येन नयेदायतनस्य प्रयतनेन ॥ १६॥
कृत्वा बलिं प्रभूतं संपूज्य ब्राह्मणांश्च सभ्यांश्च ।

दत्त्वा हिरण्यशकलं विनिक्षिपेत् पिण्डिकाश्वभ्रे ।
स्थापकदैवज्ञद्विजसभ्यस्थपतीन् विशेषतोऽभ्यर्च्य ।
कल्याणानां भागी भवतीह परत्र च स्वर्गी ॥ १७ ॥
विष्णोः भागवतान् मगांश्च सवितुः शंभोः सभस्मद्विजान
मातीणामपि मण्डलक्रमविदो (मातृमण्डलविदो) विप्रान् विदुः ब्रह्मणः ।
शाक्यान् सर्वहितस्य शान्तमनसो नग्नान् जिनानां विदुः
ये यं देवमुपाश्रिताः स्वविधिना तैः तस्य कार्या क्रिया ॥ १८ ॥
उदगयने सितपक्षे शिशिरगभस्तौ च जीववर्गस्थे ।
लग्ने स्थिरे स्थिरांशे सौम्यैः धीधर्मकेन्द्रगतैः ॥ १९ ॥
पापैरुपचयसंस्थैः ध्रुवमृदुहरितिष्यवायुदेवेषु ।
विकुजे दिनेऽनुकूले देवानां स्थापनं शस्तम् ॥ २० ॥
सामान्यमिदं समासतो लोकानां हितदं मया कृतम् ।
अधिवासनसन्निवेशने सावित्रे पृथग् एव विस्तरात् ॥ २१ ॥

---

अध्याय ६० गोलक्षणाध्यायः
पराशरः प्राह बृहद्रथाय
गोलक्षणं यत् क्रियते ततोऽयम् ।
मया समासः शुभलक्षणाः ताः
सर्वाः तथाऽपि आगमतोऽभिधास्ये ॥ १ ॥
सास्र आविलरूक्षाक्ष्यो मूषकनयनाश्न शुभदा गावः ।
प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाः (वर्नाः) च ॥ २ ॥
दशसप्तचतुर्दन्त्यः प्रलंबमुण्डानना विनतपृष्ठ्यः (पृष्ठाः) ।
ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च ॥ ३ ॥
श्यावातिदीर्घजिह्वा गुल्फैः अतितनुभिः अतिबृहद्भिः वा ।
अतिककुदाः कृशदेहा नैष्टा हीनाधिकांग्यश्च ॥ ४ ॥
वृषभोऽपि एवं स्थूलातिलंबवृषणः शिराततक्रोडः ।
स्थूलशिराचितगण्डः त्रिस्थानं मेहते यश्च ॥ ५ ॥
मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्यैव (द्विजस्येष्टः) ।
कृष्णोष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः ॥ ६ ॥
स्थूलशकृन्मणिशृंगः सितोदरः कृष्णसारवर्णश्च ।
गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः ॥ ७ ॥
श्यामकपुष्पचितांगो भस्मारुणसन्निभो बिडालाक्षः ।
विप्राणामपि न शुभं करोति वृषभः परिगृहीतः ॥ ८ ॥
ये चौद्धरन्ति पादान् पंकादिव योजिताः कृशग्रीवाः ।
कातरनयना हीनाश्च पृष्ठतः ते न भारसहाः ॥ ९ ॥
मृदुसंहतताम्रोष्ठाः तनुस्फिजः ताम्रतालुजिह्वाश्च ।
ह्रस्वतनु (तनुह्रस्वो) उच्चश्रवणाः सुकुक्षयः स्पृष्ट (स्पष्ट) जंघाश्च ॥ १० ॥
आताम्रसंहतखुरा व्यूढोरस्का बृहत्ककुदयुक्ताः ।
स्निग्धश्लक्ष्णतनुत्वग्रोमाणः ताम्रतनुशृंगाः ॥ ११ ॥
तनुभूस्पृग्वालधयो रक्तान्तविलोचना महोच्छ्वासाः ।
सिंहस्कन्धाः तन्वल्पकंबलाः पूजिताः सुगमाः (सुगताः) ॥ १२ ॥
वामावर्तैः वामे दक्षिणपार्श्वे च दक्षिणावर्तैः ।
शुभदा भवन्त्यनडुहो जंघाभिश्चएणकनिभाभिः ॥ १३ ॥
वैदूर्य (वैडूर्य) मल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रपक्ष्माणः (वर्माणः) ।
पार्ष्णिभिः अस्फुटिताभिः शस्ताः सर्वे च (अपि) भारसहाः ॥ १४ ॥
घ्राणोद्देशे सवलिः मार्जारमुखः सितश्च दक्षिणतः ।
कमलोत्पललाक्षाभः सुवालधिः वाजितुल्यजवः ॥ १५ ॥
लंबैः वृषणैः मेषोदरश्च संक्षिप्तवंक्षण (क्षणा) क्रोडः ।
ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः ॥ १६ ॥
सितवर्णः पिंगाक्षः ताम्रविषाणेक्षणो महावक्त्रः ।
हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः ॥ १७ ॥
भूस्पृग्वालधिः आताम्रविषाणो (वग्क्षणो) रक्तदृक् ककुद्मांश (ककुद्मी) च ।
कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः ॥ १८ ॥
यो वा सितैकचरणैः (सितैकचरणो) यथेष्टवर्णश्च सोऽपि शुभफलकृत् (शस्तफलः) ।
मिश्रफलोऽपि ग्राह्यो यदि नएकान्त प्रशस्तोऽस्ति ॥ १९ ॥

---

अध्याय ६१ श्वलक्षणाध्यायः
पादाः पंचनखाः त्रयोऽग्रचरणः षड्भिः नखैः दक्षिणः
ताम्रओष्ठाग्रनसो मृगेश्वरगतिः जिघ्रन् भुवं याति च ।
लांगूलं ससटं दृगृक्षसदृशी कर्णौ च लंबौ मृदू
यस्य स्यात् स करोति पोष्टुरचिरात् पुष्टां श्रियं श्वा गृहे ॥ १ ॥
पादे पादे पंच पंचाग्रपादे
वामे यस्याः षण्नखा मल्लिकाक्ष्याः ।
वक्रं पुच्छं पिंगलालंबकर्णा
या सा राष्ट्रं कुक्कुरी पाति पुष्टा (पोष्टुः) ॥ २ ॥

---

अध्याय ६२ कुक्कुटलक्षणाध्यायः
कुक्कुटः त्वृजुतनूरुहांगुलिः ताम्रवक्त्रनखचूलिकः सितः ।
रौति सुस्वरमुषात्यये च यो वृद्धिदः स नृपराष्ट्रवाजिनाम् ॥ १ ॥
यवग्रीवो यो वा बदरसदृशो वापि विहगो
बृहन्मूर्धा वर्णैः भवति बहुभिश्च रुचिरः ।
स शस्तः संग्रामे मधुमधुपवर्णश्च जयकृद्
न शस्तो योऽतोऽन्यः कृशतनुरवः खञ्जचरणः ॥ २ ॥
कुक्कुटी च मृदुचारुभाषिणी स्निग्धमूर्तिरुचिराननेषणा ।
सा ददाति सुचिरं महीक्षितां श्रीयशोविजयवीर्यसंपदः ॥ ३ ॥

---

अध्याय ६३ कूर्मलक्षणाध्यायः
स्फुटिकरजतवर्णो नीलराजीविचित्रः
कलशसदृशमूर्तिश्चारुवंशश्च कूर्मः ।
अरुणसमवपुः वा सर्षपाकारचित्रः
सकलनृपमहत्त्वं मन्दिरस्थः करोति ॥ १ ॥
अञ्जनभृंगश्यामतनुः वा बिन्दुविचित्रोऽव्यंगशरीरः ।

सर्पशिरा वा स्थूलगलो यः सोऽपि नृपाणां राष्ट्रविवृद्धयै ॥ २॥
वैडूर्यत्विट स्थूलकण्ठः त्रिकोणो
गूढच्छिद्रश्च ऊरु (चारु) वंशश्च शस्तः ।
क्रीडावाप्यां तोयपूर्णे मणौ वा
कार्यः कूर्मो मंगलार्थं नरेन्द्रैः ॥ ३॥

---

अध्याय ६४ छागलक्षणाध्यायः
छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्ताः ते ।
धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये ॥ १॥
दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहितवर्णानां श्वेतमति (अपि) शुभदम् ॥ २॥
स्तनवदवलंबते यः कण्ठेऽजानां मणिः स विज्ञेयः ।
एकमणिः शुभफलकृद्धन्यतमा द्वित्रमणयो (द्वित्रिमणयो) ये ॥ ३॥
मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च ।
अर्धासिताः सितार्धा धन्याः कपिलार्धकृष्णाश्च ॥ ४॥
विचरति यूथस्याग्रे प्रथमं चांभोऽवगाहते योऽजः ।
स शुभः सितमूर्धा वा मूर्धनि वा कृत्तिका (टिक्किका) यस्य ॥ ५॥
सपृषतकण्ठशिरा वा तिलपिष्टनिभश्च ताम्रदृक् शस्तः ।
कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः ॥ ६॥
यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं मन्दं च स शोभनच्छागः ॥ ७॥
ऋष्यशिरोरुहपादो यो वा प्राक् पाण्डुरोऽपरे नीलः ।
स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः ॥ ८॥
कुट्टकः कुटिलश्चैव जटिलो वामनः तथा ।
ते चत्वारः श्रियः पुत्रा नालक्ष्मीके वसन्ति ते ॥ ९॥
अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः ॥ १०॥
वर्णैः प्रशस्तैः मणिभिः प्रयुक्ता (च युक्ता)
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मनि (वेश्मसु) मानवानां
सौख्यानि कुर्वन्ति यशः श्रियं च ॥ ११॥

---

अध्याय ६५ अश्वालक्षणाध्यायः
दीर्घग्रीवाक्षिकूटः त्रिकहृदयपृथुः ताम्रतालु ओष्ठजिह्वः
सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णओष्ठपुच्छः ।
जंघाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो
वाजी सर्वांगशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् ॥ १॥
अश्रुपातहनुगण्डहृद् (हृड) गलप्रोथशंखकटिबस्तिजानूनि ।
मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणे तथा (चरणेषु च) शुभाः ॥ २॥
ये प्रपाणगलकर्णसंस्थिताः
पृष्ठमध्यनयनोपरि स्थिताः ।
ओष्ठसक्थिभुजकुक्षिपार्श्वगाः
ते ललाटसहिताः सुशोभनाः ॥ ३॥
तेषां प्रपाण एको ललाटकेशेषु च ध्रुवावर्ताः ।
रन्ध्रुपरन्ध्रमूर्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ ॥ ४॥
षड्भिः दन्तैः सिताभैः भवति हयशिशुः तैः कशायैः द्विवर्षैः
सन्दंशैः मध्यमन्त्यैः पति (पतित) समुदितैः त्र्यब्धि (त्र्यब्द) पंचाब्दिकाश्वः ।
सन्दंशानुक्रमेण त्रिकपरिगणिताः कालिका पीतशुक्लाः
काचा मक्षीक (माक्षीक) शंखावटचलनमतो दन्तपातं च विद्धि ॥ ५॥

---

अध्याय ६६ हस्तिलक्षणाध्यायः
मध्वाभदन्ताः सुविभक्तदेहा
न चौपदिग्धा न (दिग्धाश्च) कृशाः क्षमाश्च ।
गात्रैः समैश्चापसमानवंशा
वराहतुल्यैः जघनैश्च भद्राः ॥ १॥
वक्षोऽथ कक्षावलयः श्लथाश्च
लंबौदरः त्वग् बृहती गलश्च ।
स्थूला च कुक्षिः सह पेचकेन
सैंही च दृग् मन्दमतंगजस्य ॥ २॥
मृगाः तु ह्रस्वाधरवालमेढ्राः
तन्वंघ्रि (तन्वंह्रि) कण्ठद्विजहस्तकर्णाः ।
स्थूलेक्षणाश्चेति यथोक्तचिह्नैः
संकीर्णनागा व्यतिमिश्रचिह्नाः ॥ ३॥
पंचौन्नतिः सप्त मृगस्य दैर्घ्यम्
अष्टौ च हस्ताः परिणाहमानम् ।
एकद्विवृद्धावथ मन्दभद्रौ
संकीर्ननागोऽनियतप्रमाणः ॥ ४॥
भद्रस्य वर्णो हरितो मदश्च (मदस्य)
मन्दस्य हारिद्रकसन्निकाशः ।
कृष्णो मदश्चाभिहितो मृगस्य
संकीर्णनागस्य मदो विमिश्रः ॥ ५॥
ताम्रोष्ठतालुवदनाः कलविंकनेत्राः
स्निग्ध ऊनताग्रदशनाः पृथुलायतास्याः ।
चापौन्नतायतनिगूढनिमग्नवंशाः
तन्वेकरोमचितकूर्मसमानकुंभाः ॥ ६॥
विस्तीर्णकर्णहनुनाभिललाटगुह्याः
कूर्मौन्नतद्विनवविंशतिभिः नखैश्च ।
रेखात्रयौपचितवृत्तकराः सुवाला
धन्याः सुगन्धिमदपुष्करमारुताश्च ॥ ७॥
दीर्घांगुलिरक्तपुष्कराः सजलांभोदनिनादबृंहिणः ।
बृहदायतवृत्तकन्धरा धन्या भूमिपतेः मतंगजाः ॥ ८॥
निमर्द (निर्मदा) अभ्यधिकहीननखांगान्
कुब्जवामनकमेषविषाणान् ।
दृश्यकोशफलपुष्करहीनान
श्यावनीलशबलासिततालून् ॥ ९॥
स्वल्पवक्त्ररुहमत्कुणषण्ढान्
हस्तिनीं च गजलक्षणयुक्ताम्

गर्भिणी च नृपतिः परदेशं
प्रापयेदतिविरूपफलाः ते ॥१०॥

---

अध्याय ६७ पुरुषलक्षनाध्यायः
उन्मानमानगतिसंहतिसारवर्ण-
स्नेहस्वरप्रकृतिसत्त्वमनूकं आदौ ।
क्षेत्रं मृजां च विधिवत् कुशलोऽवलोक्य
सामुद्रविद् वदति यातमनागतं वा (च) ॥१॥
अस्वेदनौ मृदुतलौ कमलौदराभौ
श्लिष्टांगुली रुचिरताम्रनखौ सुपार्ष्णी ।
उष्णौ शिराविरहितौ सुनिगूढगुल्फौ
कूर्मौन्नतौ च चरणौ मनुजेश्वरस्य ॥२॥
शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासन्ततौ
संशुष्कौ विरलांगुली च चरणौ दारिद्र्यदुःखप्रदौ ।
मार्गायौत्कटकौ कषायसदृशौ वंशस्य विच्छेददौ
(विच्छित्तिदौ)
ब्रह्मघ्नौ परिपक्वमृद्द्युतितलौ पीतावगम्यारतौ
(पीतावगम्यरतौ) ॥३॥
प्रविरलतनुरोमवृत्तजंघा
द्विरदकरप्रतिमैः वर ऊरुभिश्च ।
उपचितसमजानवश्च भूपा
धनरहिताः श्वशृगालतुल्यजंघाः ॥४॥
रोमएकैकं कूपके पार्थिवानां
द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम् ।
त्र्याद्यैः निःस्वा मानवा दुःखभाजः
केशाश्चैवं निन्दिताः पूजिताश्च ॥५॥
निर्मांसजानुः म्रियते प्रवासे
सौभाग्यमल्पैः विकटैः दरिद्राः ।
स्त्रीनिर्जिताश्चैव (चापि) भवन्ति निम्नै
राज्यं समांशैश्च महद्भिः आयुः ॥६॥
लिंगेऽल्पे धनवान् अपत्यरहितः स्थूले ऽपि हीनो
(विहीनो) धनैः
मेढ्रे वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान् ।
दारिद्र्यं विनते त्वधोऽल्पतनयो लिंगे शिरासन्तते
स्थूलग्रन्थियुते सुखी मृदु करोत्यन्तं प्रमेहादिभिः ॥७॥
कोशनिगूढैः भूपा दीर्घैः भग्नैश्च वित्तपरिहीनाः ।
ऋजुवृत्तशेफसो लघुशिरालशिश्नाश्च धनवन्तः ॥८॥
जलमृत्युः एकवृषणो विषमैः स्त्रीचंचलः समैः क्षितिपः ।
ह्रस्वायुश्चौद्बद्धैः प्रलंबवृषणस्य शतमायुः ॥९॥
रक्तैः आढ्या मणिभिः निर्द्रव्याः पाण्डुरैश्च मलिनैश्च ।
सुखिनः सशब्दमूत्रा निःस्वा निःशब्दधाराश्च ॥१०॥
द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्तवलितमूत्राभिः ।
पृथिवीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥११॥
एकैव मूत्रधारा वलिता रूपप्रदा न सुतदात्री
(रूपप्रधानसुतदात्री) ।
स्निग्धौन्नतसममणयो धनवनितारत्नभोक्तारः ।
मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति निःस्वाश्च ।
बहुपशुभाजो मध्यौन्नतैश्च नात्युल्बणैः धनिनः ॥१२॥
परिशुष्कबस्तिशीर्षैः धनरहिता दुर्भगाश्च विज्ञेयाः ।
कुसुमसमगन्धशुक्रा विज्ञातव्या महीपालाः ॥१३॥
मधुगन्धे बहुवित्ता मत्स्यसगन्धे बहूनि अपत्यानि ।
तनुशुक्रः स्त्रीजनको मांससगन्धो महाभोगी ॥१४॥
मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः ।
शीघ्रं मैथुनगामी दीर्घायुः अतोऽन्यथा अल्पायुः ॥१५॥
निःस्वोऽतिस्थूलस्फिक् समांसलस्फिक् सुखान्वितो भवति ।
व्याघ्रान्तोऽध्यर्धस्फिग् मण्डूकस्फिग् नराधिपतिः ॥१६॥
सिंहकटिः मनुजेन्द्रः कपिकरभकटिः धनैः परित्यक्तः ।
समजठरा भोगयुता घटपिठरनिभौदरा निःस्वाः ॥१७॥
अविकलपार्श्वा धनिनो निम्नैः वक्रैश्च भोगसन्त्यक्ताः ।
समकुक्षा भोगाढ्या निम्नाभिः भोगपरिहीनाः ॥१८॥
उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युः मानवा विषमकुक्षाः ।
सर्पौदरा दरिद्रा भवन्ति बह्वाशिनश्चैव ॥१९॥
परिमण्डलौन्नताभिः विस्तीर्णाभिश्च नाभिभिः सुखिनः ।
अल्पा (स्वल्पा) त्वदृश्यनिम्ना नाभिः क्लेशावहा भवति ॥
२०॥
वलिमध्यगता विषमा शूलाद् बाधां (शूलाबाधं) करोति
नैस्वयं (नैःस्व्यं) च ।
शाठ्यं वामावर्ता करोति मेधां प्रदक्षिणतः ॥२१॥
पार्श्वायता चिरायुषमुपरिष्टागईश्वरं गवाढ्यमधः ।
शतपत्रकर्णिकाभा नाभिः मनुजेश्वरं कुरुते ॥२२॥
शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं यथासंख्यम् ।
एकद्वित्रिचतुर्भिः वलिभिः विन्द्याद् नृपं त्ववलिम् ॥२३॥
विषमवलयो मनुष्या भवन्त्यगम्या अभिगामिनः पापाः ।
ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव ॥२४॥
मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्तरोमभिः भूपाः ।
विपरीतैः निर्द्रव्याः सुखपरिहीनाः परप्रेष्याः ॥२५॥
सुभगा भवन्त्यनुद्बद्ध (अनुबद्ध) चूचुका निर्धना विषमदीर्घैः ।
पीनौपचितनिमग्नैः क्षितिपतयश्चूचुकैः सुखिनः ॥२६॥
हृदयं समुन्नतं पृथु न वेपनं मांसलं च नृपतीनाम् ।
अधनानां विपरीतं खररोमचितं शिरालं च ॥२७॥
समवक्षसोऽर्थवन्तः पीनैः शूरा हि (शूराः त्व) अकिंचनाः
तनुभिः ।
विषमं वक्षो येषां ते निःस्वाः शस्त्रनिधनाश्च ॥२८॥
विषमैः विषमो जत्रुभिः अर्थविहीनोऽस्थिसन्धिपरिणद्धैः ।
उन्नतजत्रुः भोगी (भागी) निम्नैः निःस्वोऽर्थवान् पीनैः ॥
२९॥
चिपिटग्रीवो निःस्वः शुष्का सशिरा च यस्य वा ग्रीवा ।
महिषग्रीवः शूरः शस्त्रान्तो वृषसमग्रीवः ॥३०॥
कंबुग्रीवो राजा प्रलंबकण्ठः प्रभक्षणो भवति ।
पृष्ठमभग्नमरोमशमर्थवतामशुभदमतोऽन्यत् ॥३१॥
अस्वेदनपीनौन्नतसुगन्ध (सुगन्धि) समरोमसंकुलाः कक्षाः ।
विज्ञातव्या धनिनामतोऽन्यथार्थैः विहीनानाम् ॥३२॥
निर्मांसौ रोमचितौ भग्नावल्पौ च निर्धनस्यांसौ ।

विपुलावव्युच्छिन्नौ सुश्लिष्टौ सौख्यवीर्यवताम् ॥ ३३॥
करिकरसदृशौ वृत्तावाजान्ववलंबिनौ समौ पीनौ ।
बाहू पृथिवीशानामधनानां (अधमानां) रोमशौ ह्रस्वौ ॥ ३४॥
हस्तांगुलयो दीर्घाश्चिरायुषामवलिताश्च सुभगानाम् ।
मेधाविनाम् च सूक्ष्माश्चिपिटाः परकर्मनिरतानाम् ॥ ३५॥
स्थूलाभिः धनरहिता बहिर्नताभिश्च शस्त्रनिर्याणाः ।
कपिसदृशकरा धनिनो व्याघ्रौपमपाणयः पापाः ॥ ३६॥
मणिबन्धनैः निगूढैः दृढैश्च सुश्लिष्टसन्धिभिः भूपाः ।
हीनैः हस्तच्छेदः श्लथैः सशब्दैश्च निर्द्रव्याः ॥ ३७॥
पितृवित्तेन विहीना भवन्ति निम्नेन करतलेन नराः ।
संवृतनिम्नैः धनिनः प्रोत्तानकराश्च दातारः ॥ ३८॥
विषमैः विषमा निःस्वाश्च करतलैः ईश्वराः (ईश्वराः) तु लाक्षाभैः ।
पीतैः अगम्यवनिताभिगामिनो निर्धना रूक्षैः ॥ ३९॥
तुषसदृशनखाः क्लीबाश्चिपिटैः स्फुटितैश्च वित्तसन्त्यक्ताः ।
कुनखविवर्णैः परतर्कुकाश्च ताम्रैश्चमूपतयः ॥ ४०॥
अंगुष्ठयवैः आढ्याः सुतवन्तो अंगुष्ठमूलजैश्च यवैः (मूलगैश्च यवः) ।
दीर्घांगुलिपर्वाणः सुभगा दीर्घायुषश्चैव ॥ ४१॥
स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निःस्वानाम् ।
विरलांगुलयो निःस्वा धनसंचयिनो घनांगुलयः ॥ ४२॥
तिस्रो रेखा मणिबन्धनोत्थिताः करतलौपगा नृपतेः ।
मीनयुगांकितपाणिः नित्यं सत्रप्रदो भवति ॥ ४३॥
वज्राकारा धनिनां विद्याभाजां च मीनपुच्छनिभाः ।
शंख आतपत्रशिविकागजाश्वपद्मौपमा नृपतेः ॥ ४४॥
कलशमृणालपता अकांकुशौपमाभिः भवन्ति निधिपालाः ।
दामनिभाभिश्च आढ्याः स्वस्तिकरूपाभिः ऐश्वर्यम् ॥ ४५॥
चक्रासिपरशुतोमरशक्तिधनुःकुन्तसन्निभा रेखाः ।
कुर्वन्ति चमूनाथं यज्वानमुलूखलाकाराः ॥ ४६॥
मकरध्वजकोष्ठागारसन्निभाभिः महाधनोपेताः ।
वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ॥ ४७॥
वापीदेवकुलाद्यैः धर्मं कुरुवन्ति च त्रिकोणाभिः ।
अंगुष्ठमूलरेखाः पुत्राः स्युः दारिकाः सूक्ष्माः ॥ ४८॥
रेखाः प्रदेशिनिगताः (गाः) शतायुषं कल्पनीयमूनाभिः ।
छिन्नाभिः द्रुमपतनं बहुरेखारेखिणो निःस्वाः ॥ ४९॥
अतिकृशदीर्घैश्चिबुकैः निर्द्रव्या मांसलैः धनोपेताः ।
विंब (बिंब) उपमैः अवक्रैः अधरैः भूपाः तनुभिः अस्वाः ॥ ५०॥
ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च धनपरित्यक्ताः ।
स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ॥ ५१॥
जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च भोगिनो (भोगिनां) ज्ञेया ।
श्वेता कृष्णा परुषा निर्द्रव्याणां तथा तालु ॥ ५२॥
वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समं च भूपानाम् ।
विपरीतं क्लेशभुजां महामुखं दुर्भगाणां च ॥ ५३॥
स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परिज्ञेयम् ।
दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः ॥ ५४॥
चतुरस्रं (चतुरश्रं) धूर्तानां निम्नं वक्रं (वक्त्रं) च तनयरहितानाम् ।
कृपणानामतिह्रस्वं संपूर्णं भोगिनां कान्तम् ॥ ५५॥
अस्फुटिताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्नतं चैव ।
रक्तैः परुषैश्चौराः श्मश्रुभिः अल्पैश्च विज्ञेयाः ॥ ५६॥
निर्मांसैः कर्णैः पापमृत्यवश्चर्पटैः सुबहुभोगाः ।
कृपणाश्च ह्रस्वकर्णाः शंकुश्रवणाश्चमूपतयः (च भूपतयः) ॥ ५७॥
रोमशकर्णा दीर्घायुषश्च (तु) धनभागिनो विपुलकर्णाः ।
क्रूराः शिरावनद्धैः व्यालंबैः मांसलैः सुखिनः ॥ ५८॥
भोगी त्वनिम्नगण्डो मन्त्री संपूर्णमांसगण्डो यः ।
सुखभाक् शुकसमनासश्चिरजीवी शुष्कनासश्च ॥ ५९॥
छिन्नानुरूपया अगम्यगामिनो दीर्घया तु सौभाग्यम् ।
आकुंचितया चौरः स्त्रीमृत्युः स्यागिपिटनासः ॥ ६०॥
धनिनोऽग्रवक्रनासा दक्षिणविनताः (वक्राः) प्रभक्षणाः क्रूराः ।
ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा सभाग्यानाम् ॥ ६१॥
धनिनां क्षुतं सकृद् द्वित्रिपिण्डितं ह्लादि सानुनादं च ।
दीर्घायुषां प्रमुक्तं विज्ञेयं संहतं चैव ॥ ६२॥
पद्मदलाभैः धनिनो रक्तान्तविलोचनाः (विलोचनाः) श्रियः भाजः ।
मधुपिंगलैः महार्था मार्जारविलोचनैः पापाः ॥ ६३॥
हरिणाक्षा मण्डललोचनाश्च जिह्मैश्च लोचनैश्चौराः ।
क्रूराः केकरनेत्रा गजसदृशविलोचनाश्चमूपतयः (दृशश्च भूपतयः) ॥ ६४॥
ऐश्वर्यम् गंभीरैः नीलोत्पलकान्तिभिश्च विद्वांसः ।
अतिकृष्णतारकाणामक्ष्णामुत्पाटनं भवति ॥ ६५॥
मन्त्रित्वं स्थूलदृशां श्यावाक्षाणां भवति सौभाग्यम् ।
दीना दृग् निःस्वानां स्निग्धा विपुलार्थभोगवताम् ॥ ६६॥
अभ्युन्नताभिः अल्पायुषो विशालौन्नताभिः अतिसुखिनः ।
विषमभ्रुवो दरिद्रा बालेन्दुनतभ्रुवः सधनाः ॥ ६७॥
दीर्घा असंसक्ताभिः धनिनः खण्डाभिः अर्थपरिहीनाः ।
मध्यविनतभ्रुवो ये ते सक्ताः स्त्रीष्वगम्यासु ॥ ६८॥
उन्नतविपुलैः शंखैः धनिनो (धन्या) निम्नैः सुतार्थसन्त्यक्ताः ।
विषमललाटा विधना धनवन्तोऽर्धेन्दुसदृशेन ॥ ६९॥
शुक्तिविशालैः आचार्यता शिरासन्ततैः अधर्मरताः ।
उन्नतशिराभिः आढ्याः स्वस्तिकवत् संस्थिताभिश्च ॥ ७०॥
निम्नललाटा वधबन्धभागिनः क्रूरकर्मनिरताश्च ।
अभ्युन्नतैश्चमूपाः (भूपाः) कृपणाः स्युः संवृत (सङ्कट) ललाटाः ॥ ७१॥
रुदितमदीनमनश्रु स्निग्धं च शुभावहं मनुष्याणाम् ।
रूक्षं दीनं प्रचुराश्रु चैव न शुभप्रदं पुंसाम् ॥ ७२॥
हसितं शुभदमकंपं सनिमीलितलोचनं तु पापस्य ।

दुष्टस्य (हृष्टस्य) हसितमसकृत् सोन्मादस्यासकृत् प्रान्ते ॥ ७३॥
तिस्रो रेखाः शतजीविनां ललाटायताः स्थिता यदि ताः ।
चतसृभिः अवनीशत्वं नवतिश्चायुः सपंचाब्दा ॥ ७४॥
विच्छिन्नाभिश्चागम्यगामिनो नवतिः अपि अरेखेण ।
केशान्तोपगताभी रेखाभिः अशीतिवर्षायुः ॥ ७५॥
पंचभिः आयुः सप्ततिः एकाग्रावस्थिताभिः अपि षष्टिः ।
बहुरेखेण शतार्धं चत्वारिंशग वक्राभिः ॥ ७६॥
भ्रूलग्नाभिः त्रिंशद् (त्रिंशभ्रूलग्नाभिः) विंशतिकश्चैव वामवक्राभिः ।
क्षुद्राभिः स्वल्पायुः न्यूनाभिश्चान्तरे कल्प्यम् ॥ ७७॥
परिमण्डलैः गवाढ्याश्छत्राकारैः शिरोभिः अवनीशाः ।
चिपिटैः पितृमातृघ्नाः करोटिशिरसां चिरान् मृत्युः ॥ ७८॥
घटमूर्धा अध्वानरुचिः द्विमस्तकः पापकृद् धनैः त्यक्तः ।
निम्नं तु शिरो महतां बहुनिम्नमनर्थदं भवति ॥ ७९॥
एकैकभवैः स्निग्धैः कृष्णैः आकुंचितैः अभिन्नाग्रैः ।
मृदुभिः न चातिबहुभिः केशैः सुखभाग् नरेन्द्रो वा ॥ ८०॥
बहुमूलविषमकपिलाः स्थूलस्फुटिताग्रपरुषह्रस्वाश्च ।
अतिकुटिलाश्चातिघनाश्च मूर्धजा वित्तहीनानाम् ॥ ८१॥
यद्यद् गात्रं रूक्षं मांसविहीनं शिरावनद्धं च ।
तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्वम् ॥ ८२॥
त्रिषु विपुलो गंभीरः त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पंचसु दीर्घश्च सूक्ष्मश्च ॥ ८३॥
नाभी (नाभिः) स्वरः सत्त्वमिति प्रशस्तं (प्रदिष्टं)
गंभीरमेतत् त्रितयं नराणाम् ।
उरो ललाटं वदनं च पुंसां
विस्तीर्णमेतत् त्रितयं प्रशस्तम् ॥ ८४॥
वक्षोऽथ कक्षा नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिंगपृष्ठं
ग्रीवा च जंघे च हितप्रदानि ॥ ८५॥
नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सप्त सुखावहानि ।
सूक्ष्माणि पंच दशनांगुलिपर्वकेशाः
साकं त्वचा कररुहा न च (कररुहाश्च न) दुःखितानाम् ॥ ८६॥
हनुलोचनबाहुनासिकाः स्तनयोः अन्तरमत्र पंचमम् ।
इति दीर्घमिदं तु पंचकं न भवत्येव नृणामभूभृताम् ॥ ८७॥
छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिः अपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥ ८८॥
स्निग्धद्विजत्वग्नखरोमकेशाः (केश)
छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति
धर्मस्य चाहन्यहनि प्रवृत्तिम् ॥ ८९॥

स्निग्धा सिताच्छहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्वार्थसिद्धिजननी जननीव च आप्या
छाया फलं तनुभृतां शुभमादधाति ॥ ९०॥
चण्डा अधृष्या पद्महेमाग्निवर्णा
युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयीति प्राणिनां स्याज्जयाय
क्षिप्रं सिद्धिं वांछितार्थस्य दत्ते (धत्ते) ॥ ९१॥
मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताआत्युदारा
निधिः इव गगनोत्था श्रेयसां स्वच्छवर्णा ॥ ९२॥
छायाः क्रमेण कुजलाग्न्यनिलांबरोत्थाः
केचिद् वदन्ति दश ताश्च यथानुपूर्व्या ।
सूर्याब्जनाभपुरुहूतयमौडुपानां
तुल्याः तु लक्षणफलैः इति तत्समासः ॥ ९३॥
करिवृषरथौघभेरीमृदंगसिंहाभ्र (अब्द) निःस्वना भूपाः ।
गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः ॥ ९४॥
सप्त भवन्ति च सारा मेदोमज्जात्वगस्थिशुक्राणि ।
रुधिरं मांसं चेति प्राणभृतां तत्समासफलम् ॥ ९५॥
ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः ।
रक्ते (रक्तैः) तु रक्तसारा बहुसुखवनितार्थपुत्रयुताः ॥ ९६॥
स्निग्धत्वक्का धनिनो मृदुभिः सुभगा विचक्षणाः तनुभिः ।
मज्जामेदःसाराः सुशरीराः पुत्रवित्तयुताः (युक्ताः) ॥ ९७॥
स्थूलास्थिः अस्थिसारो बलवान् विद्यान्तगः सुरूपश्च ।
बहुगुरुशुक्राः सुभगा विद्वांसो रूपवन्तश्च ॥ ९८॥
उपचितदेहो विद्वान् धनी सुरूपश्च मांससारो यः ।
संघाता इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेया ॥ ९९॥
स्नेहः पंचसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः ।
सुतधनसौभाग्ययुताः स्निग्धैः तैः निर्धना रूक्षैः ॥ १००॥
द्युतिमान् वर्णस्निग्धः (वर्णः स्निग्धः) क्षितिपानाम् मध्यमः सुतार्थवताम् ।
रूक्षो धनहीनानां शुद्धः शुभदो न संकीर्णः ॥ १०१॥
साध्यमनूकं वक्त्राद् गोवृषशार्दूलसिंहगरुडमुखाः ।
अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च ॥ १०२॥
वानरमहिषवराहाजतुल्यवदनाः श्रुतार्थ (सुतार्थ) सुखभाजः ।
गर्दभकरभप्रतिमैः मुखैः शरीरैश्च निःस्वसुखाः ॥ १०३॥
अष्टशतं षण्णवतिः (षणवतिः) परिमाणं चतुरशीतिः इति पुंसाम् ।
उत्तमसमहीनानामंगुलसंख्या स्वमानेन ॥ १०४॥
भारार्धतनुः सुखभाक् तुलितोऽतो दुःखभाग् भवत्यूनः ।
भारोऽतिवाढ्यानामध्यर्धः सर्वधरणीशः ॥ १०५॥
विंशतिवर्षा नारी पुरुषः खलु पंचविंशतिभिः अब्दैः ।
अर्हति मानोन्मानं जीवितभागे चतुर्थे वा ॥ १०६॥
भूजलशिख्यनिलांबरसुरनररक्षः पिशाचकतिरश्चाम् ।

सत्त्वेन भवति पुरुषो लक्षणमेतद् भवति तेषां (एषां) ॥ १०७॥
महीस्वभावः शुभपुष्पगन्धः
संभोगवान् सुश्वसनः स्थिरश्च ।
तोयस्वभावो बहुतोयपायी
प्रियाभिभाषी (अभिलाषी) रसभाजनः (भोजनः) च ॥ १०८॥
अग्निप्रकृत्या चपलोऽतितीक्ष्णश
चण्डः क्षुधालुः बहुभोजनश्च ।
वायोः स्वभावेन चलः कृशश्च
क्षिप्रं च कोपस्य वशं प्रयाति ॥ १०९॥
खप्रकृतिः निपुणो विवृतास्यः
शब्दगतेः कुशलः सुशिरांगः ।
त्यागयुतः (त्यागयुतो) पुरुषो मृदुकोपः
स्नेहरतश्च भवेत् सुरसत्त्वः ॥ ११०॥
मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः ।
संविभागशीलवान् नित्यमेव मानवः ॥ १११॥
तीक्ष्णप्रकोपः खलचेष्टितश्च
पापश्च सत्त्वेन निशाचराणाम् ।
पिशाचसत्त्वश्चपलो मलाक्तो
बहुप्रलापी च समुल्बणांगः ॥ ११२॥
भीरुः क्षुधालुः बहुभुक् च यः स्याद्
ज्ञेयश्च (स) सत्त्वेन नरः तिरश्चाम् ।
एवं नराणां प्रकृतिः प्रदिष्टा
यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम् ॥ ११३॥
शार्दूलहंससमदद्विपगोपतीनां
तुल्या भवन्ति गतिभिः शिखिनां च भूपाः ।
येषां च शब्दरहितं स्तिमितं च यातं
तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः ॥ ११४॥
श्रान्तस्य यानमशनं च बुभुक्षितस्य
पानं तृषापरिगतस्य भयेषु रक्षा ।
एतानि यस्य पुरुषस्य भवन्ति काले
धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥ ११५॥
पुरुषलक्षणमुक्तमिदं मया मुनिमतानि अवलोक्य समासतः ।
इदमधीत्य नरो नृपसम्मतो भवति सर्वजनस्य च वल्लभः ॥ ११६॥

---

अध्याय ६८ पंचमनुष्यविभागाध्यायः
ताराग्रहैः बलयुतैः स्वक्षेत्रस्वौच्चगैश्चतुष्टयगैः ।
पंच पुरुषाः प्रशस्ता जायन्ते तान् अहं वक्ष्ये ॥ १॥
जीवेन भवति हंसः सौरेण शशः कुजेन रुचकश्च ।
भद्रो बुधेन बलिना मालव्यो दैत्यपूज्येन ॥ २॥
सत्त्वमहीनं सूर्यात्शारीरं मानसं च चन्द्रबलात् ।
यद् राशिभेदयुक्तावेतौ तल्लक्षणः स पुमान् ॥ ३॥
तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यैः ।
अबलरवीन्दुयुतैः तैः संकीर्णा लक्षणैः पुरुषाः ॥ ४॥
भौमात् सत्त्वं गुरुता बुधात् सुरेज्यात् स्वरः सितात् स्नेहः ।
वर्णः सौरादेषां गुणदोषैः साध्वसाधुत्वम् ॥ ५॥
संकीर्णाः स्युः न नृपा दशासु तेषां भवन्ति सुखभाजः ।
रिपुगृहनीचौच्चच्युतसत्पापनिरीक्षणैः भेदाः (भेदः) ॥ ६॥
षण्णवतिः अंगुलानां व्यायामो दीर्घता च हंसस्य ।
शशरुचकभद्रमालव्यसंज्ञिताः त्र्यंगुलविवृद्ध्या ॥ ७॥
यः सात्त्विकः तस्य दया स्थिरत्वं
सत्त्वार्जवं ब्राह्मणदेवभक्तिः ।
रजो अधिकः काव्यकलाक्रतुस्त्री-
संसक्तचित्तः पुरुषोऽतिशूरः ॥ ८॥
तमोऽधिको वंचयिता परेषां
मूर्खोऽलसः क्रोधपरोऽतिनिद्रः ।
मिश्रैः गुणैः सत्त्वरजस्तमोभिः
मिश्राः तु ते सप्त सह प्रभेदैः ॥ ९॥
मालव्यो नागनासः समभुज (नागनाससमभुज) युगलो जानुसंप्राप्तहस्तो
मांसैः पूर्णांगसन्धिः समरुचिरतनुः मध्यभागे कृशश्च ।
पंचाष्टौ च ऊर्ध्वमास्यं श्रुतिविवरमपि त्र्यंगुलोनं च तिर्यग्
दीप्ताक्षं सत्कपोलं समसितदशनं नातिमांसाधरोष्ठम् ॥ १०॥
मालवान् स भरुकच्छसुराष्ट्रान
लाटसिन्धुविषयप्रभृतींश्च ।
विक्रमार्जितधनोऽवति राजा
पारियात्रनिलयान् (निलयः) कृतबुद्धिः ॥ ११॥
सप्ततिवर्षो मालव्योऽयं त्यक्ष्यति सम्यक् प्राणां तीर्थे ।
लक्षणमेतत् सम्यक् प्रोक्तं शेषनराणां चातो वक्ष्ये ॥ १२॥
उपचितसमवृत्तलंबबाहुः
भुजयुगलप्रमितः समुच्छ्रयोऽस्य ।
मृदुतनुघनरोमनद्धगण्डो
भवति नरः खलु लक्षणेन भद्रः ॥ १३॥
त्वक्शुक्रसारः पृथुपीनवक्षाः
सत्त्वाधिको व्याघ्रमुखः स्थिरश्च ।
क्षमान्वितो धर्मपरः कृतज्ञो
गजेन्द्रगामी बहुशास्त्रवेत्ता ॥ १४॥
प्राज्ञो वपुष्मान् सुललाटशंखः
कलास्वभिज्ञो धृतिमान् सुकुक्षिः ।
सरोजगर्भद्युतिपाणिपादो
योगी सुनासः समसंहतभ्रूः ॥ १५॥
नवांबुसिक्तावनिपत्रकुंकुम-
द्विपेन्द्रदानागुरुतुल्यगन्धता ।
शिरोरुहाश्चएकजकृष्णकुंचिताः
तुरंगनागोपमगुह्यगूढता (गूढगुह्यता) ॥ १६॥
हलमुशलगदासिशंखचक्र-
द्विपमकराब्जरथांकितांघ्रि (अन्घ्रि) हस्तः ।
विभवमपि जनोऽस्य बोभुजीति
क्षमति हि न स्वजनं स्वतन्त्रबुद्धिः ॥ १७॥

अंगुलानि नवतिश्च षड्ूनान्यस्
उच्छ्रयेण तुलयापि हि भारः ।
मध्यदेशनृपतिः यदि पुष्टाश
त्र्यादयोऽस्य सकलावनिनाथः ॥१८॥
भुक्त्वा सम्यग्वसुधां शौर्येणौपार्जितामशीत्यब्दः ।
तीर्थे प्राणां त्यक्त्वा भद्रो देवालयं याति ॥१९॥
ईषद्दन्तुरकः तनुद्विजनखः कोशेक्षणः शीघ्रगो
विद्याधातुवणिक्क्रियासु निरतः संपूर्णगण्डः शठः ।
सेनानीः प्रियमैथुनः परजनस्त्रीसक्तचित्तश्चलः
शूरो मातृहितो वनाचलनदीदुर्गेषु सक्तः शशः ॥२०॥
दीर्घो अंगुलानां शतमष्टहीनं
साशंकचेष्टः पररन्ध्रविग ।
सारोऽस्य मज्जा निभृतप्रचारः
शशो ह्यतो (अयं) नातिगुरुः प्रदिष्टः ॥२१॥
मध्ये कृशः खेटकखंगवीणा
पर्यंकमालामुरजानुरूपाः ।
शूलोपमाश्च ऊर्ध्वगताश्च रेखाः
शशस्य पादोपगताः करे वा ॥२२॥
प्रात्यन्तिको माण्डलिकोऽथवा अयं
स्फिक्स्रावशूलाभिभवार्तमूर्तिः ।
एवं शशः सप्ततिहायनोऽयं
वैवस्वतस्यालयमभ्युपैति ॥२३॥
रक्तं पीनकपोलमुन्नतनसं वक्त्रं सुवर्णोपमं
वृत्तं चास्य शिरोऽक्षिणी मधुनिभे सर्वे च रक्ता नखाः ।
स्रग्दामांकुशशंखमत्स्ययुगलक्रत्वंगकुंभांबुजैश
चिह्नैः हंसकलस्वनः सुचरणो हंसः प्रसन्नेन्द्रियः ॥२४॥
रतिः अंभसि शुक्रसारता द्विगुणा चाष्टशतैः पलैः मितिः ।
परिमाणमथास्य षड्युता नवतिः संपरिकीर्तिता बुधैः ॥२५॥
भुनक्ति हंसः खसशूरसेनान् गान्धारगंगायामुनान्तरालम् ।
शतं दशोनं शरदां नृपत्वं कृत्वा वनान्ते समुपैति मृत्युम् ॥
२६॥
सुभ्रूकेशो रक्तश्यामः कंबुग्रीवो व्यादीर्घास्यः ।
शूरः क्रूरः श्रेष्ठो मन्त्री चौरस्वामी व्यायामी च ॥२७॥
यन्मात्रमास्यं रुचकस्य दीर्घं
मध्यप्रदेशे चतुरस्रता (चतुरश्रता) सा ।
तनुच्छविः शोणितमांससारो
हन्ता द्विषां साहससिद्धकार्यः ॥२८॥
खट्वांगवीणावृषचापवज्र-
शक्तीन्द्रशूलांकितपाणिपादः ।
भक्तो गुरुब्राह्मणदेवतानां
शतांगुलः स्यात् तु सहस्रमानः (तुलया सहस्रं) ॥२९॥
मन्त्राभिचारकुशलः कृशजानुजंघो
विन्ध्यं ससह्यगिरिमुज्जयिनीं च भुक्त्वा ।
संप्राप्य सप्ततिसमा रुचको नरेन्द्रः
शस्त्रेण मृत्युमुपयात्यथवाऽनलेन ॥३०॥
पंचापरे वामनको जघन्यः
कुब्जोऽथवा मण्डलकोऽथ साची (समी) ।
पूर्वोक्तभूपानुचरा भवन्ति
संकीर्णसंज्ञः (संज्ञाः) शृणु लक्षणैः तान् ॥३१॥
संपूर्णांगो वामनो भग्नपृष्ठः
किंचिग ऊरूमध्यकक्ष्य (कक्ष) अन्तरेषु ।
ख्यातो राज्ञां ह्येष भद्रानुजीवी
स्फीटो राजा (दाता) वासुदेवस्य भक्तः ॥३२॥
मालव्यसेवी तु जघन्यनामा
खण्डेन्दुतुल्यश्रवणः सुसन्धिः ।
शुक्रेण सारह पिशुनः कविश्च
रूक्षच्छविः स्थूलकरांगुलीकः ॥३३॥
क्रूरो धनी स्थूलमतिः प्रतीतः
ताम्रच्छविः स्यात् परिहासशीलः
उरो अंघ्रि (अन्घ्रि) हस्तेष्वसिशक्तिपाश-
परश्वधांकः स (अंगकश्च) जघन्यनामा ॥३४॥
कुब्जो नाम्ना यः स शुद्धो ह्यधस्तात्
क्षीणः किंचित् पूर्वकाये नतश्च ।
हंसासेवी नास्तिकोऽर्थैरुपेतो
विद्वान् शूरः सूचकः स्यात् कृतज्ञः ॥३५॥
कलास्वभिज्ञः कलहप्रियश्च
प्रभूतभृत्यः प्रमदाजितश्च ।
संपूज्य लोकं प्रजहात्यकस्मात्
कुब्जोऽयमुक्तः सततोद्यतश्च ॥३६॥
मण्डलकक्षणमतो (कनामधेयो लक्षणमतो)
रुचकानुचरोऽभिचारवित् कुशलः ।
कृत्यावेताल (वैताल) आदिषु कर्मसु विद्यासु चानुरतः ॥
३७॥
वृद्धाकारः खरपरुषमूर्धजश्रूक्षमूर्धजः) च शत्रुनाशने कुशलः
।
द्विजदेवयज्ञयोगप्रसक्तधीः स्त्रीजितो मतिमान् ॥३८॥
साचीइति (सामीति) यः सोऽतिविरूपदेहः
शशानुगामी खलु दुर्भगश्च ।
दाता महारंभसमाप्तकार्यो
गुणैः शशस्यैव भवेत् समानः ॥३९॥
पुरुषलक्षणमुक्तमिदम् मया
मुनिमतानि निरीक्ष्य समासतः ।
इदमधीत्य नरो नृपसम्मतो
भवति सर्वजनस्य च वल्लभः ॥४०॥

---

अध्याय ६९ कन्यालक्षणाध्यायः
स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः
पादौ समौपचितचारुनिगूढगुल्फौ ।
श्लिष्टांगुली कमलकान्तितलौ च यस्याः
तामुद्वहेद् यदि भुवोऽधिपतित्वमिच्छेत् ॥१॥
मत्स्यांकुशाब्जयववज्रहलासिचिह्न-
अवस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ ।
जंघे च रोमरहिते विशिरे सुवृत्ते

जानुद्वयं सममनुल्बणसन्धिदेशम् ॥ २॥
ऊरू घनौ करिकरप्रतिमावरोमाव
अश्वत्थपत्रसदृशं विपुलं च गुह्यम् ।
श्रोणीललाटमुरुकूर्मसमुन्नतं च
गूढो मणिश्च विपुलां श्रियमादधाति ॥ ३॥
विस्तीर्णमांसौपचितो नितंबः
गुरुश्च धत्ते रशना (रसना) कलापम् ।
नाभिः गभीरा (गंभीरा) विपुलांगानां
प्रदक्षिनावर्तगता च शस्ता (प्रशस्ता) ॥ ४॥
मध्यं स्त्रियाः त्रिवलिनाथमरोमशं च
वृत्तौ घनावविषमौ कठिनावुरस्यौ ।
रोमप्रवर्जितं (अपवर्जितं) उरो मृदु चांगनानां
ग्रीवा च कंबुनिचितार्थसुखानि दत्ते (धत्ते) ॥ ५॥
बन्धुजीवकुसुमोपमोऽधरो
मांसलो रुचिरबिंबरूपभृत् ।
कुन्दकुड्मलनिभाः समा द्विजा
योषितां पतिसुखामितार्थदाः ॥ ६॥
दाक्षिण्ययुक्तमशठं परपुष्टहंस-
वल्गु प्रभाषितमदीनमनल्पसौख्यम् ।
नासा समा समपुटा रुचिरा प्रशस्ता
दृग्नीलनीरजदलद्युतिहारिणी च ॥ ७॥
नो संगते नातिपृथू न लंबे शस्ते भ्रुवौ बालशशांकवक्रे ।
अर्धेन्दुसंस्थानमरोमशं च शस्तं ललाटं न नतं न तुंगम् ॥ ८॥
कर्णयुग्ममपि युक्तमांसलं शस्यते म्रदु समाहितम् समं (समं समाहितं) ।
स्निग्धनीलमृदुकुंचितैकजा मूर्धजाः सुखकराः समं शिरः ॥ ९॥
भृंगारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभिः
मालाकुण्डलचामरांकुशयवैः शैलैः ध्वजैः तोरणैः ।
मत्स्यस्वस्तिकवेदिकाव्यजनकैः शंखातपत्रांबुजैः
पादे पाणितलेऽथवा (अपि वा) युवतयो गच्छन्ति राज्ञीपदम् ॥ १०॥
निगूढमणिबन्धनौ तरुणपद्मगर्भोपमौ
करौ नृपतियोषितस्योषितां) तनुविकृष्टपर्वांगुली ।
न निम्नमति नौन्नतं करतलं सुरेखान्वितं
करोत्यविधवां चिरं सुतसुखार्थसंभोगिनीम् ॥ ११॥
मध्यांगुलिं या मणिबन्धनोत्था
रेखा गता पाणितले अंगनायाः ।
ऊर्ध्वस्थिता पादतलेऽथवा या
पुंसोऽथवा राज्यसुखाय सा स्यात् ॥ १२॥
कनिष्ठिकामूलभवा गता या
प्रदेशिनीमध्यमिकान्तरालम् ।
करोति रेखा परमायुषः सा
प्रमाणमूना तु तदूनमायुः ॥ १३॥
अंगुष्टमूले प्रसवस्य रेखाः
पुत्रा बृहत्यः प्रमदाः तु तन्व्यः ।
अच्छिन्नमध्या (दीर्घा) बृहदायुषः (बृहदायुषां) ताः
स्वल्पायुषां छिन्नलघुप्रमाणाः ॥ १४॥
इतीदमुक्तं शुभमंगनानाम्
अतो विपर्यस्तमनिष्टमुक्तम् ।
विशेषतोऽनिष्टफलानि यानि
समासतः तानि अनुकीर्तयामि ॥ १५॥
कनिष्ठिका वा तदनन्तरा वा
महीं न यस्याः श्पृशति स्त्रियाः स्यात् ।
गताथवंगुष्ठमतीत्य यस्याः
प्रदेशिनी सा कुलटाऽतिपापा ॥ १६॥
उद्बद्धाभ्याम् पिण्डिकाभ्याम् शिराले
शुष्के जंघे लोमशे (रोमशे) चातिमांसे
वामावर्तं निम्नमल्पं च गुह्यं
कुंभाकारं चोदरं दुःखितानाम् ॥ १७॥
ह्रस्वयातिनिःस्वता दीर्घया कुलक्षयः ।
ग्रीवया पृथूत्थया योषितः प्रचण्डता ॥ १८॥
नेत्रे यस्याः केकरे पिंगले वा
सा दुःशीला श्यावलोलेक्षणा च ।
कूपौ यस्या गण्डयोश्च स्मितेषु
निःसन्दिग्धं बन्धकीं तां वदन्ति ॥ १९॥
प्रविलंबिनि देवरं ललाटे
श्वशुरं हन्त्युदरे स्फिजोः पतिं च ।
अतिरोमचयान्वितौत्तरओष्ठी
न शुभा भर्तुः अतीव या च दीर्घा ॥ २०॥
स्तनौ सरोमौ मलिनौल्बणौ च
क्लेशं दधाते विषमौ च कर्णौ ।
स्थूलाः कराला विषमाश्च दन्ताः
क्लेशाय चौर्याय च कृष्णमांसाः ॥ २१॥
क्रव्यादरूपैः वृककाककंक-
सरीसृपौलूकसमानचिह्नैः
शुष्कैः शिरालैः विषमैश्च हस्तैः
भवन्ति नार्यह सुखवित्तहीनाः ॥ २२॥
या तूत्तरोष्ठेन समुन्नतेन
रूक्षाग्रकेशी कलहप्रिया सा ।
प्रायो विरूपासु भवन्ति दोषा
यत्राकृतिः तत्र गुणा वसन्ति ॥ २३॥
पादौ सगुल्फौ प्रथमं प्रदिष्टौ जंघे द्वितीयं तु सजानुचक्रे ।
मेढ्र ऊरुमुष्कं च ततः तृइतीयं नाभिः कटिश्चैव (च इति) चतुर्थमाहुः ॥ २४॥
उदरं कथयन्ति पंचमं हृदयं षष्ठमतः स्तनान्वितम् ।
अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥ २५॥
नवमं नयने च सभ्रुणी सललाटं दशमं शिरः तथा ।
अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनम् ॥ २६॥

---

अध्याय ७० वस्त्रच्छेदलक्षणाध्यायः
प्रभूतवस्त्रदाश्विनी भरणि अथापहारिणी ।

प्रदह्यतेऽग्निदैवते प्रजेस्वरेऽर्थसिद्धयः ॥ १॥
मृगे तु मूषकाद् भयं व्यसुत्वमेव शंकरे ।
पुनर्वसौ शुभागमः तदग्रभे धनैः युतिः ॥ २॥
भुजंगभे विलुप्यते मघासु मृत्युमादिशेत् ।
भगाह्वये नृपाद् भयं धनागमाय चौत्तरा ॥ ३॥
करेण कर्मसिद्धयः शुभागमः तु चित्रया ।
शुभं च भोज्यमानिले द्विदैवते जनप्रियः ॥ ४॥
सुहृद्द्युतिः (सुहृद्युतिः) च मित्रभे तदग्रभे (पुरन्दरे) ऽंबरक्षयः ।
जलप्लुतिश्च नैरृते रुजो जलाधिदैवते ॥ ५॥
मिष्टमन्नमपि वैश्वदैवते वैष्णवे भवति नेत्ररोगता ।
धान्यलब्धिः (लब्धिं) अपि (अथ) वासवे (विश्वदैवते) विदुः वारुणे विषकृतं महद्भयम् ॥ ६॥
भद्रपदासु भयं सलिलोत्थं
तत्परतश्च भवेत् सुतलब्धिः ।
रत्नयुतिं कथयन्ति च पौष्णे
योऽभिनवांबरमिच्छति भोक्तुम् ॥ ७॥
विप्रमतादथ भूपतिदत्तं यग विवाहविधावभिलब्धम् ।
तेषु गुणै रहितेष्वपि भोक्तुं नूतनमंबरमिष्टफलं स्यात ॥८॥
भोक्तुं नवांबरं शस्तम् ऋक्षेऽपि गुणवर्जिते ।
विवाहे राजसम्माने ब्रह्मणाणां च सम्मते ॥ ९॥
वस्त्रस्य कोणेषु वसन्ति देवा नराश्च पाशान्तदशान्तमध्ये ।
शेषाः त्रयश्चात्र निशाचरांशाः तथैव शय्यासनपादुकासु ॥ १०॥
लिप्ते मषीगोमयकर्दमाद्यैश्छिन्ने प्रदग्धे स्फुटिते च विन्द्यात् ।
पुष्टं नवेऽल्पाल्पतरं च भुक्ते पापं शुभं चाधिकमुत्तरीये ॥ ११॥
रुग्राक्षसांशेस्वथवाऽपि मृत्युः पुन्जन्मतेजश्च मनुष्यभागे ।
भागेऽमराणामथ भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम् ॥ १२॥
कंकप्लवौलूककपोतकाकक्रव्यादगोमायुखरौष्ट्रसर्पैः ।
छेदाकृतिः दैवतभागगापि पुंसां भयं मृत्युसमं करोति ॥ १३॥
छत्रध्वजस्वस्तिकवर्धमानश्रीवृक्षकुंभांबुजतोरणाद्यैः ।
छेदाकृतिः नैरृतभागगा अपि पुंसां विधत्ते नचिरेण लक्ष्मीम् ॥ १४॥

---

अध्याय ७१ चामरलक्षणाध्यायः
देवैश्चमर्यः किल वालहेतोः
सृष्टा हिमक्ष्माधरकन्दरेषु ।
आपीतवर्णाश्च भवन्ति तासां
कृष्णाश्च लांगूलभवाः सिताश्च ॥ १॥
स्नेहो मृदुत्वं बहुव्लता (लता च)
वैशद्यमल्पास्थिनिबन्धनत्वम् ।
शौक्ल्यं च तासां (तेषां) गुणसंपदुक्ता
विद्धाल्पलुप्तानि न शोभनानि ॥ २॥
अध्यर्धहस्तप्रमितोऽस्य दण्डो
हस्तोऽथवा अरत्निसमोऽथवा अन्यः ।
काष्ठात्शुभात् कांचनरूप्यगुप्ताद्
रत्नैश्च सर्वैः (विचित्रैः) च हिताय राज्ञाम् ॥ ३॥
यष्ट्यातपत्रांकुशवेत्रचापवितानकुन्तध्वजचामराणाम् ।
व्यापीततन्त्रीमधुकृष्णवर्णा वर्णक्रमेणैव हिताय दण्डाः ॥ ४॥
मातृभूधनकुलक्षयावहा
रोगमृत्युजननाश्च पर्वभिः ।
द्व्यादिभिः द्विकविवर्धितैः क्रमात्
द्वादशान्तविरतैः समैः फलम् ॥ ५॥
यात्राप्रसिद्धिः द्विषतां विनाशो
लाभाः प्रभूता (प्रभूतो) वसुध्पमः (गमः) च ।
व्रिद्धः पशूनामभिवंछिताप्तिः
त्र्याद्येष्वयुग्मेषु तदीश्वराणाम् ॥ ६॥

---

अध्याय ७२ छत्रलक्षणाध्यायः
निचितं तु (नु) हंसपक्षैः कृकवाकुमयूरसारसानां वा ।
दौकूल्येन (दौकूलेन) नवेन तु समन्ततश्छादितं शुक्लम् ॥ १॥
मुक्ताफलैरुपचितं प्रलंबमालाविलं स्फटिकमूलम् ।
षड्ढस्तशुद्धहैमं नवपर्वनगैकदण्डं तु ॥ २॥
दण्डार्धविस्तृतं तत् समावृतं रत्नभूषितं (रत्नविभूषितम, रत्नभूषितं) उदग्रम् ।
नृपतेः तदातपत्रं कल्याणपरं विजयदं च ॥ ३॥
युवराजनृपतिपत्न्योः सेनापतिदण्डनायकानां च ।
दण्डोऽर्धपंचहस्तः समपंचकृतोऽर्ध (कृतार्ध) विस्तारः ॥ ४॥
अन्येषामुष्णघ्नं प्रसादपट्टैः विभूषितशिरस्कम् ।
व्यालंबिरत्नमालं छत्रं कार्यं तु (च) मायूरम् ॥ ५॥
अन्येषां तु नराणां शीतातपवारणं तु चतुरस्रं (चतुरश्रं) ।
समवृत्तदण्डयुक्तं छत्रं कार्यं तु विप्राणाम् ॥ ६॥

---

अध्याय ७३ स्त्रीप्रशंसाध्यायः
जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चएकदेशः ।
तत्रापि शय्या शयने वरा स्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः ॥ १॥
रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या ।
चेतो विनता हरनि अरत्ना नो रत्नानि विनांगनांगसंगं (संगात्) ॥ २॥
आकारं विनिगूहतां रिपुबलं जेतुं समुत्तिष्ठतां
तन्त्रं चिन्तयतां कृताकृतशतव्यापारशाखाकुलम् ।
मन्त्रिप्रोक्तनिषेविणां (निसेविणाम, निषेविनां)
क्षितिभुजामाशंकिनां सर्वतो
धुःखांभोनिधिवर्तिनां सुखलवः कान्तासमालिंगनम् ॥ ३॥
श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं
न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना ।
तदर्थं धर्मार्थौ सुतविषयसौख्यानि च ततो
गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः ॥ ४॥

येऽपि अंगनानां प्रवदन्ति दोषान
वैराग्यमार्गेण गुणान् विहाय ।
ते दुर्जना मे मनसो वितर्कः
सद्भाववाक्यानि न तानि तेषाम् ॥ ५ ॥
प्रब्रूत सत्यं करतो अंगनानां
दोषोऽस्ति यो नाचरितो मनुष्यैः ।
धाष्ट्र्येन पुंभिः प्रमदा निरस्ता
गुणाधिकाः ता मनुनात्र चोक्तम् ॥ ६ ॥
सोमः तासामदात्शौचं गन्धर्वः (गन्धर्वाः) शिक्षितां गिरम् ।
अग्निश्च सर्वभक्षित्वं तस्मान् निष्कसमाः स्त्रियः ॥ ७ ॥
ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः ।
अजाश्वा मुखतो मेध्याः स्त्रियो मेध्याश्तु सर्वतः ॥ ८ ॥
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजो ह्यासां दुष्कृतानि अपकर्षति ॥ ९ ॥
जामयो यान्ति गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ १० ॥
जाया वा स्याज्जनित्री वा संभवः स्त्रीकृतो नृणाम् ।
हे कृतघ्नाश्तयोः निन्दां कुर्वतां वः कुतः शुभम् ॥ ११ ॥
दंपत्योः व्युत्क्रमे दोषः समः शास्त्रे प्रतिष्ठितः ।
नरा न समवेक्षन्ते तेनात्र वरमंगनाः ॥ १२ ॥
बहिः लोम्ना तु षण्मासान् वेष्टितः खरचर्मणा ।
दारातिक्रमणे भिक्षां देहीत्युक्त्वा विशुध्यति ॥ १३ ॥
न शतेनापि वर्षाणामपैति मदनाशयः ।
तत्र अशक्त्या निर्वर्तन्ते नरा धैर्येण योषितः ॥ १४ ॥
अहो धाष्ट्र्यमसाधूनां निन्दतामनघाः स्त्रियः ।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ॥ १५ ॥
पुरुषश्चटुलानि कामिनीनां
कुरुते यानि रहो न तानि पश्चात् ।
सुकृतज्ञतया अंगना गतासून
अवगूह्य प्रविशन्ति सप्तजिह्वम् ॥ १६ ॥
स्त्रीरत्नभोगोऽस्ति नरस्य यस्य
निःस्वोऽपि सांप्रत्यवनीस्वरो (स्वं प्रत्यवनीस्वरो, मां प्रत्यव) ऽसौ ।
राज्यस्य सारोऽशनमंगनाश्च
तृष्णानलोद्दीपनदारु शेषम् ॥ १७ ॥
कामिनीं प्रथमयौवनान्वितां
मन्दवल्गुमृदुपीडितस्वनाम् ।
उत्स्तनीं समवलंब्य या रतिः
सा न धातृभवनेऽस्ति मे मतिः ॥ १८ ॥
तत्र देवमुनिसिद्धचारणैः
मान्यमानपितृसेव्यसेवनात् ।
ब्रूत धातृभवनेऽस्ति किं सुखं
यद् रहः समवलंब्य न स्त्रियम् ॥ १९ ॥
आब्रह्मकीटान्तमिदं निबद्धं
पुंस्त्रीप्रयोगेण जगत् समस्तम् ।
व्रीडा अत्र का यत्र चतुर्मुखत्वम्
ईशोऽपि लोभाद् गमितो युवत्याः ॥ २० ॥

---

अध्याय ७४ सौभाग्यकरणाध्यायः
जात्यं मनोभवसुखं सुभगस्य सर्वम्
आभासमात्रमितरस्य मनोवियोगात् ।
चित्तेन भावयति दूरगता अपि यं स्त्री
गर्भं बिभर्ति सदृशं पुरुषस्य तस्य ॥ १ ॥
भंक्त्वा काण्डं पादपस्यौप्तमुर्व्यां
बीजं वास्यां नान्यतामेति यद्वत् ।
एवं ह्यात्मा जायते स्त्रीषु भूयः
कश्चित् तस्मिन् क्षेत्रयोगाद् विशेषः ॥ २ ॥
आत्मा सहैति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः ।
योगोऽयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥ ३ ॥
आत्मायमात्मनि गतो हृदयेऽतिसूक्ष्मो
ग्राह्योऽचलेन मनसा सतताभियोगात् ।
यो यं विचिन्तयति याति स तन्मयत्वं
यस्मादतः सुभगमेव गता युवत्यः ॥ ४ ॥
दाक्षिण्यमेकं सुभगत्वहेतुः विद्वेषणं तद्विपरीतचेष्टा ।
मन्त्रौषधाद्यैः कुहकप्रयोगैः भवन्ति दोषा बहवो न शर्म ॥ ५ ॥
वाल्लभ्यमायाति विहाय मानं दौर्भाग्यमापादयतेऽभिमानः ।
कृच्छ्रेण संसाधयतेऽभिमानी कार्याणि अयत्नेन वदन् प्रियाणि ॥ ६ ॥
तेजो न तद् यत् प्रियसाहसत्वं वाक्यं न चानिष्टमसत्प्रणीतम् ।
कार्यस्य गत्वान्तमनुद्धता ये तेजस्विनः ते न विकत्थना ये ॥ ७ ॥
यः सार्वजन्यं सुभगत्वमिच्छेद् गुणान् स सर्वस्य वदेत् परोक्षं (परोक्षे) ।
प्राप्नोति दोषान् असतोऽपि अनेकान् परस्य यो दोषकथां करोति ॥ ८ ॥
सर्वोपकारानुगतस्य लोकः सर्वोपकारानुगतो नरस्य ।
कृत्वा उपकारं द्विषतां विपत्सुया कीर्तिः अल्पेन न सा शुभेन ॥ ९ ॥
तृणैः इवाग्निः सुतरां विवृद्धिमाच्छाद्यमानोऽपि गुणोऽभ्युपैति ।
स केवलं दुर्जनभावमेति हन्तुं गुणान् वांछति यः परस्य ॥ १० ॥

---

अध्याय ७५ कान्दर्किकाध्यायः
रक्तेऽधिके स्त्री पुरुषः तु शुक्रे नपुंसकं शोणितशुक्रसाम्ये ।
यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि ॥ १ ॥
हर्म्यपृष्ठमुडुनाथरश्मयः सौत्पलं मधु मदालसा प्रिया ।

वल्लकी स्मरकथा रहः स्रजो वर्ग एष मदनस्य वागुरा ॥ २॥
माक्षीकधातुमधुपारदलोहचूर्ण-
पथ्याशिल्जतुघृतानि समानि (जतुविडग्गघृतानि) योऽद्यात् ।
सैकानि विंशतिः अहानि जरान्वितोऽपि
सोऽशीतिकोऽपि रमयत्यब्लां युवा इव ॥ ३॥
क्षीरं शृतं यः कपिकच्छुमूलैः
पिबेत् क्षयं स्त्रीषु न सोऽभ्युपैति ।
माषान् पयःसर्पिषि वा विपक्वान
षड्ग्रासमात्रांश्च पयोऽनुपानं (अनुपानान्) ॥ ४॥
विदारिकायाः स्वरसेन चूर्णं मुहुर्मुहुः भावितशोषितं च ।
शृतेन दुग्धेन सशर्करेण पिबेत् स यस्य प्रमदाः प्रभूताः ॥ ५॥
धात्रीफलानां स्वरसेन चूर्णं
सुभावितं क्षौद्रसिताज्ययुक्तम् ।
लीढ्वानु पीत्वा च पयोऽग्निशक्त्या
कामं निकामं पुरुषो निषेवेत् ॥ ६॥
क्षीरेण बस्ताण्डयुजा शृतेन
संप्लाव्य कामी बहुशस्तिलान् यः ।
सुशोषितान् अत्ति पयः पिबेच् (पिबेत् पयः) च
तस्याग्रतः किं चटकः करोति ॥ ७॥
माषसूपसहितेन सर्पिषा षष्टिकौदनमदन्ति ये नराः ।
क्षीरमपि अनु पिबन्ति तासु ते शर्वरीषु मदनेन (मदने न) शेरते ॥ ८॥
तिलाश्वगन्धाकपिच्छुमूलैः
विदारिकाषष्टिकपिष्टयोगः ।
आजेन पिष्टः पयसा घृतेन
पक्वं (पक्त्वा) भवेत्शुष्कलिकातिवृष्या ॥ ९॥
क्षीरेण वा गोक्षुरकौपयोगं
विदारिकाकन्दकभक्षणं वा ।
कुर्वन् न सीदेद् यदि जीर्यतेऽस्य
मन्दाग्निता चेदिदमत्र चूर्णम् ॥ १०॥
साजमोदलवणा हरीतकी शृंगवेरसहिता च पिप्पली ।
मद्यतक्रतरलोष्णवारिभिश्चूर्णपानमुदराग्निदीपनम् ॥ ११॥
अत्यम्लतिक्तलवणानि कटूनि वाऽत्ति
यः क्षारशाकबहुलानि (क्षारशाकबहुलानि) च भोजनानि ।
दृक्षुक्रवीर्यरहितः स करोत्यनेकान
व्याजान् जरन्न् इव युवाऽपि अबलामवाप्य ॥ १२॥

---

अध्याय ७६ गन्धयुक्त्यः
स्रग्गन्धधूपांबरभूषणाद्यं न शोभते शुक्लशिरोरुहस्य ।
यस्मादतो मूर्धजरागसेवां कुर्याद् यथैवाञ्जनभूषणानाम् ॥ १॥
लौहे पात्रे तण्डुलान् कोद्रवाणां
शुक्ले पक्वांल्लोहचूर्णेन साकम् ।
पिष्टान् सूक्ष्मं मूर्ध्नि शुक्लाम्लकेशे
दत्वा (दत्त्वा) तिष्ठेद् वेष्टयित्वा अर्द्र (अर्क) पत्रैः ॥ २॥
याते द्वितीये प्रहरे विहाय
दद्यात्शिरस्यामलकप्रलेपम् ।
संछाद्य पत्रैः प्रहरद्वयेन
प्रक्षालितं कार्ष्ण्यमुपैति शीर्षम् ॥ ३॥
पश्चात्शिरः स्नानसुगन्धतैलैः
लोहाम्लगन्धं शिरसोऽपनीय ।
हृदयैश्च गन्धैः विविधैश्च धूपैः
अन्तःपुरे राज्यसुखं निषेवेत् ॥ ४॥
त्वक्कुष्ठरेणुनलिकास्पृक्कारसतगरबालकैः तुल्यैः ।
केसरपत्रविमिश्रैः नरपतियोग्यं शिरःस्नानम् ॥ ५॥
मञ्जिष्ठया व्याघ्रनखेन शुक्त्या त्वचा सकुष्ठेन रसेन चूर्णः ।
तैलेन युक्तोऽर्कमयूखतप्तः करोति तच्चंपकगन्धि तैलम् ॥ ६॥
तुल्यैः पत्रतुरुष्कबालतगरैः गन्धः स्मरोद्दीपनः
सव्यामो बकुलोऽयमेव कटुकाहिंगुप्रधूपान्वितः ।
कुष्ठेनौत्पलगन्धिकः समलयः पूर्वो भवेगंपको
जातीत्वक्सहितोऽतिमुक्तक इति ज्ञेयः सकुस्तुंबुरुः ॥ ७॥
शतपुष्पाकुन्दुरुकौ पादेनार्धेन नखतुष्कौ च ।
मलयप्रियंगुभागौ गन्धो धूप्यो गुडनखेन ॥ ८॥
गुग्गुलुबालक (वालक) लाक्षामुस्तानखशर्कराः क्रमाद् धूपः ।
अन्यो मांसीबालक (वालक) तुष्कनखचन्दनैः पिण्डः ॥ ९॥
हरीतकीशंखघनद्रवांबुभिः
गुडोत्पलैः शैलकमुस्तकान्वितैः ।
नवान्तपादादिविवर्धितैः क्रमाद्
भवन्ति धूपा बहवो मनोहराः ॥ १०॥
भागैश्चतुर्भिः सितशैलमुस्ताः
श्रीसर्जभागौ नखगुग्गुलू च ।
कर्पूरबोधो मधुपिण्डितोऽयं
कोपच्छदो नाम नरेन्द्रधूपः ॥ ११॥
त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः ।
पुटवासः प्रवरोऽयं मृगकर्पूरप्रबोधेन ॥ १२॥
घनबालकशैलेयककर्पूरौशीरनागपुष्पाणि ।
व्याघ्रनखस्पृक्कागुरुदमनक (मदनक)नखतगरधान्यानि ॥ १३॥
कर्पूरचोल (चोर) मलयैः स्वेच्छापरिवर्तितैश्चतुर्भिः अतः ।
एकद्वित्रिचतुर्भिः भागैः गन्धार्णवो भवति ॥ १४॥
अत्युल्बणगन्धत्वादेकांशो नित्यमेव धान्यानाम् ।
कर्पूरस्य तदूनो नैतौ द्वित्रिआदिभिः देयौ ॥ १५॥
श्रीसर्जगुडनखैः ते धूपयितव्याः क्रमान् न पिण्डस्थैः ।
बोधः कस्तूरिकया देयः कर्पूरसंयुतया ॥ १६॥
अत्र सहस्रचतुष्टयमन्यानि च सप्ततिसहस्राणि ।
लक्षं शतानि सप्त विंशतियुक्तानि गन्धानाम् ॥ १७॥
एकैकमेकभागं द्वित्रिचतुर्भागिकैः युतं द्रव्यैः ।
षड्गन्धकरं तद्वद् द्वित्रिचतुर्भागिकं कुरुते ॥ १८॥

द्रव्यचतुष्टययोगाद् गन्धचतुर्विंशतिः यथैकस्य ।
एवं शेषाणामपि षण्णवतिः सर्वपिण्डोऽत्र ॥१९॥
षोडशके द्रव्यगणे चतुर्विकल्पेन भिद्यमानानाम् ।
अष्टादश जायन्ते शतानि सहितानि विंशत्या ॥२०॥
षण्णवतिभेदभिन्नश्चतुर्विकल्पो गणो यतः तस्मात् ।
षण्णनवतिगुणः कार्यः सा संख्या भवति गन्धानाम् ॥२१॥
पूर्वेण पूर्वेण गतेन युक्तं
स्थानं विनान्त्यं प्रवदन्ति संख्याम् ।
इच्छाविकल्पैः क्रमशोऽभिनीय
नीते निवृत्तिः पुनः अन्यनीतिः ॥२२॥
द्वित्रीन्द्रियाष्टभागैः अगुरुः पत्रं तुरुष्कशैलेयौ
विषयाष्टपक्षदहनाः प्रियंगुमुस्तारसाः केशः ॥२३॥
स्पृक्कात्वक्तगराणां मांस्याश्च कृतैकसप्तषड्भागाः ।
सप्तऋतुवेदचन्द्रैः मलयनखश्रीककुन्दुरुकाः ॥२४॥
षोडशके कच्छपुटे यथा तथा मिश्रिते चतुर्द्रव्ये
(मिश्रितैश्चतुर्द्रव्यैः) ।
येऽत्राष्टादश भागाः तेऽस्मिन् गन्धादयो योगाः ॥२५॥
नखतगरतुरुष्कयुता जातीकर्पूरमृगकृतौद्बोधाः ।
गुडनखधूप्या गन्धाः कर्तव्याः सर्वतोभद्राः ॥२६॥
जातीफलमृगकर्पूरबोधितैः ससहकारमधुसिक्तैः ।
बहवोऽत्र पारिजाताश्चतुर्भिः इच्छापरिगृहीतैः ॥२७॥
सर्जरसश्रीवासकसमन्विता येऽत्र सर्वधूपाः (सर्वयोगाः) तैः ।
श्रीसर्जरसवियुक्तैः स्नानानि सबालक (सवालक) त्वग्भिः ॥२८॥
रोध्रौशीरनतागुरुमुस्तापत्र (मुस्ता) प्रियंगुवनपथ्याः ।
नवकोष्ठात् कच्छपुटाद् द्रव्यत्रितयं समुद्धृत्य ॥२९॥
चन्दनतुरुष्कभागौ शुक्त्यर्धं पादिका तु शतपुष्पा ।
कटुहिंगुलगुडधूप्याः केसरगन्धाश्चतुरशीतिः ॥३०॥
सप्ताहं गोमूत्रे हरीतकीचूर्णसंयुते क्षिप्त्वा ।
गन्धोदके च भूयो विनिक्षिपेद् दन्तकाष्ठानि ॥३१॥
एलात्वक्पत्राञ्जनमधुमरिचैः नागपुष्पकुष्ठैश्च ।
गन्धांभः कर्तव्यं किंचित् कालं स्थितानि अस्मिन् ॥३२॥
जातीफलपत्रैलाकर्पूरैः कृतयमएकशिखिभागैः ।
अवचूर्नितानि भानोः मरीचिभिः शोषणीयानि ॥३३॥
वर्णप्रसादं वदनस्य कान्तिं
वैशद्यमास्यस्य सुगन्धितां च ।
संसेवितुः श्रोत्रसुखां च वाचं
कुर्वन्ति काष्ठानि असकृद्भवानाम् ॥३४॥
कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धितां च ।
ऊर्जं करोति कफजांश्च निहन्ति रोगां
तांबूलमेवमपरांश्च गुणान् करोति ॥३५॥
युक्तेन चूर्णेन करोति रागं
रागक्षयं पूगफलातिरिक्तम् ।
चूर्णाधिकं वक्त्रविगन्धकारि
पत्राधिकं साधु करोति गन्धम् ॥३६॥
पत्राधिकं निशि हितंसफलं दिवा च
प्रोक्तानि अथाकरणमस्य विडंबनैव
कक्कोलपूगलवलीफलपारिजातैः
आमोदितं मदमुदा मुदितं करोति ॥३७॥

---

अध्याय ७७ स्त्रीपुंससमायोगाध्यायः
शस्त्रेन वेणीविनिगूहितेन विदूरथं स्वा महिषी जघान ।
विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम् ॥१॥
एवं विरक्ता जनयन्ति दोषान्
प्राणच्छिदोऽन्यैः अनुकीर्तितैः किम् ।
रक्ताविरक्ताः पुरुषैः अतोऽर्थात्
परीक्षितव्याः प्रमदाः प्रयत्नात् ॥२॥
स्नेहं मनोभवकृतं कथयन्ति भावा
नाभीभुजस्तनविभूषणदर्शनानि ।
वस्त्राभिसंयमनकेशविमोक्षणानि
भ्रूक्षेपकंपितकटाक्षनिरीक्षणानि ॥३॥
उच्चैः ष्ठीवनमुत्कटप्रहसितं शय्यासनोत्सर्पणं
गात्रास्फोटनजृंभणानि सुलभद्रव्याल्पसंप्रार्थना ।
बालालिंगनचुंबनानि अभिमुखे सख्याः समालोकनं
दृक्पातश्च परान्मुखे गुणकथा कर्णस्य कण्डूयनम् ॥४॥
इमां च विन्द्यादनुरक्तचेष्टां
प्रियाणि वक्ति स्वधनं ददाति ।
विलोक्य संहृष्यति वीतरोषा
प्रमार्ष्टि दोषान् गुणकीर्तनेन ॥५॥
तन्मित्रपूजा तदरिद्विषत्वं
कृतस्मृतिः प्रोषितदौर्मनस्यम् ।
स्तनौष्ठदानानि उपगूहनं च ।
स्वेदोऽथ चुंबाप्रथमाभियोगः ॥६॥
विरक्तचेष्टा भ्रूकुटी (भृकुटी) मुखत्वं
परान्मुखत्वं कृतविस्मृतिश्च ।
असंभ्रमो दुष्परितोषता च
तद्द्विष्टमैत्री परुषं च वाक्यम् ॥७॥
स्पृष्ट्वा अथवालोक्य धुनोति गात्रं
करोति गर्वं न रुणद्धि यान्तम् ।
चुंबाविरामे वदनं प्रमार्ष्टि
पश्चात् समुत्तिष्ठति पूर्वसुप्ता ॥८॥
भिक्षुणिका प्रव्रजिता दासी धात्री कुमारिका रजिका ।
मालाकारी दुष्टांगना सखी नापिती दूत्यः ॥९॥
कुलजनविनाशहेतुः दूत्यो यस्मादतः प्रयत्नेन ।
ताभ्यः स्त्रियोऽभिरक्ष्या वंशयशोमानवृद्ध्यर्थम् ॥१०॥
रात्रीविहारजागररोगव्यपदेशपरगृहेक्षणिकाः ।
व्यसनौत्सवाश्च संकेतहेतवः तेषु रक्ष्याश्च ॥११॥
आदौ नैच्छति नौज्झति स्मरकथां व्रीडाविमिश्रालसा
मध्ये ह्रीपरिवर्जिताभ्युपरमे लज्जाविनम्रानना ।
भावैः नैकविधैः करोत्यभिनयं भूयश्च या सादरा

बुद्ध्वा पुंप्रकृतिं च यानुचरति ग्लानेतरैश्चेष्टितैः ॥ १२ ॥
स्त्रीणां गुणा यौवनरूपवेष-
दाक्षिण्यविज्ञानविलासपूर्वाः ।
स्त्री रत्नसंज्ञा च गुणान्वितासु
स्त्रीव्याधयोऽन्याश्चतुरस्य पुंसः ॥ १३ ॥
न ग्राम्यवर्णैः मलदिग्धकाया
निन्द्यांगसंबन्धिकथां च कुर्यात् ।
न चान्यकार्यस्मरणं रहःस्था
मनो हि मूलं हरदग्धमूर्तेः ॥ १४ ॥
श्वासं मनुष्येण समं त्यजन्ती बाहूपधानस्तनदानदक्षा ।
सुगन्धकेशा सुसमीपरागा सुप्तेऽनुसुप्ता प्रथमं विबुद्धा ॥ १५ ॥
दुष्टस्वभावाः परिवर्जनीया विमर्दकालेषु च न क्षमा याः ।
यासामसृग्वासितनीलपीतमाताम्रवर्णं च न ताः प्रशस्ताः ॥ १६ ॥
या स्वप्नशीला बहुरक्तपित्ता प्रवाहिनी वातकफातिरक्ता (अतिरिक्ता) ।
महाशना स्वेदयुतांगदुष्टा या ह्रस्वकेशी पलितान्विता वा (च) ॥ १७ ॥
मांसानि यस्याश्च चलन्ति नार्या
महोदरा खिक्खिमिनी च या स्यात् ॥ १८ ॥
स्त्रीलक्षणे याः कथिताश्च पापाः
ताभिः न कुर्यात् सह कामधर्मम् ॥ १९ ॥
शशशोणितसंकाशं लाक्षारससन्निकाशमथवा यत् ।
प्रक्षालितं विरज्यति यगासृक् तद्भवेत्शुद्धम् ॥ २० ॥
यच्छब्दवेदनावर्जितं त्र्यहात् सन्निवर्तते रक्तम् ।
तत्पुरुषसंप्रयोगादविचारं गर्भतां याति ॥ २१ ॥
न दिनत्रयं निषेव्यं (निषेवेत्) स्नानं माल्यानुलेपनं स्त्रीभिः (च स्त्री) ।
स्नायागतुर्थदिवसे शास्त्रौक्तेनौपदेशेन ॥ २२ ॥
पुष्यस्नानौषधयो याः कथिताः ताभिः अंबुमिश्राभिः ।
स्नायात् तथात्र मन्त्रः स एव यः तत्र निर्दिष्टः ॥ २३ ॥
युग्मासु किल मनुष्या निशासु नार्यो भवन्ति विषमासु ।
दीर्घायुषः सुरूपाः सुखिनश्च विकृष्टयुग्मासु ॥ २४ ॥
दक्षिणपार्श्वे पुरुषो वामे नारी यमावुभयसंस्थौ ॥ २५ ॥
यदुदरमध्यौपगतं नपुंसकं तन्निबोद्धव्यम् ॥ २६ ॥
केन्द्रत्रिकोणेषु शुभस्थितेषु
लग्ने शशांके च शुभैः समेते ।
पापैः त्रिलाभारिगतैश्च यायात्
पुंजन्मयोगेषु च संप्रयोगम् ॥ २७ ॥
न नखदशनविक्षतानि कुर्याद्
ऋतुसमये पुरुषः स्त्रियाः कथंचित् ।
ऋतुः अपि दश षट च वासराणि
प्रथमनिशात्रितयं न तत्र गम्यम् ॥ २८ ॥

---

अध्याय ७८ शय्यासनलक्षणाध्यायः
सर्वस्य सर्वकालं यस्मादुपयोगमेति शास्त्रमिदम् ।
राज्ञां विशेषतोऽतः शयनासनलक्षणं वक्ष्ये ॥ १ ॥
असनस्पन्दनचन्दनहरिद्रसुरदारुतिन्दुकीशालाः ।
काश्मर्यञ्जनपद्मकशाका वा शिंशपा च शुभाः ॥ २ ॥
अशनिजलानिलहस्तिप्रपातिता मधुविहंगकृतनिलयाः ।
चैत्यश्मशानपथिज ऊर्ध्वशुष्कवल्लीनिबद्धाश्च ॥ ३ ॥
कण्टकिनो ये च (वा ये) स्युः महानदीसंगमौद्भवा ये च ।
सुरभवनजाश्च न शुभा ये चापरयाम्यदिक्पतिताः ॥ ४ ॥
प्रतिषिद्धवृक्षनिर्मितशयनासनसेवनात् कुलविनाशः ।
व्याधिभयव्ययकलहा भवन्त्यनर्था (अनर्थाश्च) अनेकविधाः ॥ ५ ॥
पूर्वच्छिन्नं यदि वा दारु भवेत् तत्परीक्ष्यमारंभे ।
यद्यारोहेत् तस्मिन् कुमारकः पुत्रपशुदं तत् ॥ ६ ॥
सितकुसुममत्तवारणदध्यक्षतपूर्णकुंभरत्नानि ।
मंगल्यानि अन्यानि च दृष्ट्वारंभे शुभं ज्ञेयम् ॥ ७ ॥
कर्मांगुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् ।
अंगुलशतं नृपाणां महती शय्या जयाय कृता ॥ ८ ॥
नवतिः सैव षड्ना द्वादशहीना त्रिषड्कहीना च ।
नृपपुत्रमन्त्रिबलपतिपुरोधसां स्युः यथासंख्यम् ॥ ९ ॥
अर्धमतोऽष्टांशोनं विष्कंभो विश्वकर्मणा प्रोक्तः ।
आयामत्र्यंशसमः पादौच्छ्रायः सकुक्ष्य (सकुक्षि) शिराः ॥ १० ॥
यः सर्वः श्रीपर्ण्या पर्यंको निर्मितः स धनदाता ।
असनकृतो रोगहरः तिन्दुकसारेण वित्तकरः ॥ ११ ॥
यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः ।
चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् ॥ १२ ॥
यः पद्मकपर्यंकः स दीर्घमायुः श्रियं श्रुतं वित्तम् ।
कुरुते शालेन कृतः कल्याणं शाकरचितश्च ॥ १३ ॥
केवलचन्दनरचितं कांचनगुप्तं विचित्ररत्नयुतम् ।
अध्यासन् पर्यंकं विबुधैः अपि पूज्यते नृपतिः ॥ १४ ॥
अन्येन समायुक्ता न तिन्दुकी शिंशपा च शुभफलदा ।
न श्रीपर्णेन (श्रीपर्णी न) च देवदारुवृक्षो न चाप्यसनः ॥ १५ ॥
शुभदौ तु शालशाकौ (शाकशालौ) परस्परं संयुतौ पृथक् चैव ।
तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रककदंबौ ॥ १६ ॥
सर्वः स्पन्दनरचितो न शुभः प्राणान् हिनस्ति चांबकृतः ।
असनोऽन्यदारुसहितः क्षिप्रं दोषान् करोति बहून् ॥ १७ ॥
अंबस्पन्दनचन्दनवृक्षाणां स्पन्दनात्शुभाः पादाः ।
फलतरुणा शयनासनमिष्टफलं भवति सर्वेण ॥ १८ ॥
गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगे ।
कार्योऽलंकारविधिः गजदन्तेन प्रशस्तेन ॥ १९ ॥
दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेत्शेषम् ।
अधिकमनूपचराणां न्यूनं गिरिचारिणां किंचित् ॥ २० ॥
श्रीवृक्ष (वत्स) वर्धमानच्छत्रध्वजचामरानुरूपेषु ।
छेदे दृष्टेष्वारोग्य (अरोग्य) विजयधनवृद्धिसौख्यानि ॥ २१ ॥
प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रनष्टदेशाप्तिः ।

लोष्ठे तु लब्धपूर्वस्य भवति देशस्य संप्राप्तिः ॥ २२॥
स्त्रीरूपे धननाशो (स्वविनाशो) भृंगारेऽभ्युत्थिते सुतोत्पत्तिः ।
कुंभेन निधिप्राप्तिः यात्राविघ्नं च दण्डेन ॥ २३॥
कृकलासकपिभुजंगेष्वसुभिक्षव्याधयो रिपुवशित्वं (वशत्वं) ।
गृध्रौलूकध्वांक्षश्येनाकारेषु जनमरकः ॥ २४॥
पाशेऽथवा कबन्धे नृपमृत्युः जनविपत् स्रुते रक्ते ।
कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ २५॥
शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः ।
अशुभशुभच्छेदा ये शयनेष्वपि ते तथा फलदाः ॥ २६॥
ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः ।
अपसव्यैकदिगग्रे भवति भयं भूतसञ्जनितम् ॥ २७॥
एकेनावाक्षिरसा (एकेनावाक्च्छिरसा) भवति हि पादेन पादवैकल्यम् ।
द्वाभ्यां न जीर्यतेऽन्नं त्रिचतुर्भिः क्लेशवधबन्धाः ॥ २८॥
सुषिरेऽथवा विवर्णे ग्रन्थौ पादस्य शीर्षगे व्याधिः ।
पादे कुंभो यश्च ग्रन्थौ तस्मिन्न् उदररोगः ॥ २९॥
कुंभाधस्ताज्जंघा तत्र कृतो जंघयोः करोति भयम् ।
तस्याश्चाधरोऽधः क्षयकृद् द्रव्यस्य तत्र कृतः ॥ ३०॥
खुरदेशे यो ग्रन्थिः खुरिणां पीडाकरः स निर्दिष्टः ।
ईषाशीर्षण्योश्च त्रिभागसंस्थो भवेन् न शुभः ॥ ३१॥
निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं च ।
कालकमन्यद् धुन्धुकमिति कथितश्छिद्रसंक्षेपः ॥ ३२॥
घटवत् सुशिरं मध्ये संकटमास्ये च निष्कुटं छिद्रम् ।
निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् ॥ ३३॥
सूकरनयनं विषमं विवर्णमध्यर्धपर्वदीर्घम् च ।
वामावर्तं भिन्नं पर्वमितं वत्सनाभाख्यम् ॥ ३४॥
कालकसंज्ञं कृष्णं धुन्धुकमिति यद् भवेद् विनिर्भिन्नम् ।
दारुसवर्णं छिद्रं न तथा पापं समुद्दिष्टम् ॥ ३५॥
निष्कुटसण्ज्ञे द्रव्यक्षयः तु कोलेक्षणे कुलध्वंसः ।
शस्त्रभयं सूकरके रोगभयं वत्सनाभाख्ये ॥ ३६॥
कालकधुन्धुकसंज्ञं कीटैः विद्धं च न शुभदं छिद्रम् ।
सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु ॥ ३७॥
एकद्रुमेण धन्यं वृक्षद्वयनिर्मितं च धन्यतरम् ।
त्रिभिः आत्मजवृद्धिकरं चतुर्भिः अर्थं (अर्थो) यशश्चाग्र्यम् ॥ ३८॥
पंचवनस्पतिरचिते पंचत्वं याति तत्र यः शेते ।
षट्सप्ताष्टतरूणां काष्ठैः घटिते कुलविनाशः ॥ ३९॥

---

अध्याय ७९ रत्नपरीक्षाध्यायः
रत्नेन शुभेन शुभं भवति नृपाणामनिष्तमशुभेन ।
यस्मादतः परीक्ष्यं दैवं रत्नाश्रितम् तज्ज्ञैः ॥ १॥
द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति ।
इह तूपलरत्नानामधिकारो वज्रपूर्वाणाम् ॥ २॥
रत्नानि बलाद् दैत्याद् दधीचितोऽन्ये वदन्ति जातानि ।
केचिद् भुवः स्वभावाद् वैचित्र्यं प्राहुरुपलानाम् ॥ ३॥
वज्रेन्द्रनीलमरकतकर्केतरपद्मरागरुधिराख्याः ।
वैदूर्य (वैडूर्य) पुलकविमलकराजमणिस्फतिकशशिकान्ताः ॥ ४॥
सौगन्धिकगोमेदकशंखमहानीलपुष्परागाख्याः ।
ब्रह्ममणिज्योतीरससस्यकमुक्ताप्रवालानि ॥ ५॥
वेणातटे विशुद्धं शिरीषकुसुमप्रभं (क उपमं) च कौशलकम् ।
सौराष्ट्रकमाताम्रं कृष्णं सौर्पारकं वज्रम् ॥ ६॥
ईषत्ताम्रं हिमवति मतंगजं वल्लपुष्पसंकाशम् ।
आपीतं च कलिंगे श्यामं पौण्ड्रेषु संभूतम् ॥ ७॥
एन्द्रं षडश्रि शुक्लं याम्यं सर्पास्यरूपमसितं च ।
कदलीकाण्डनिकाशं वैष्णवमिति सर्वसंस्थानम् ॥ ८॥
वारुणमबलागुह्योपमं भवेत् कर्णिकारपुष्पनिभम् ।
शृंगाटकसंस्थानं व्याघ्राक्षिनिभं च हौतभुजम् ॥ ९॥
वायव्यं च यवोपममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोतः खनिः प्रकीर्णकमित्याकरसंभवः त्रिविधः ॥ १०॥
रक्तं पीतं च शुभम् राजन्यानाम् सितम् द्विजातीनाम् ।
शैरीषं वैश्यानां शूद्राणां शस्यतेऽसितनिभम् ॥ ११॥
सितसर्षपाष्टकं तण्डुलो भवेत् तण्डुलैः तु विंशत्या ।
तुलितस्य द्वे लक्षे मूल्यं द्विद्व्यूनिते चैतत् ॥ १२॥
पादत्र्यंशार्धोनं त्रिभागपंचांशषोडशांशाश्च ।
भागश्च पंचविंशः शतिकः साहस्रिकश्चेति ॥ १३॥
सर्वद्रव्याभेद्यं लघ्वंभसि तरति रश्मिवत् स्निग्दम् ।
तडिदनलशक्रचापोपमं च वज्रं हितायोक्तम् ॥ १४॥
काकपदमक्षिकाकेशधातुयुक्तानि शर्करैः (शर्करा) विद्धम् ।
द्विगुणाश्रि दग्ध (दिग्ध) कलुषत्रस्तविशीर्णानि न शुभानि ॥ १५॥
यानि च बुद्बुददलिताग्रचिपिटवासीफलप्रदीर्घाणि ।
सर्वेषां चैतेषां मूल्याद् भागोऽष्टमो हानिः ॥ १६॥
वज्रं न किंचिदपि धारयितव्यमेके
पुत्रार्थिनीभिः अबलाभिरुशन्ति तज्ज्ञाः ।
शृंगाटकत्रिपुटधान्यकवत् स्थितं यच्
श्रोणीनिभं च शुभदं तनयार्थिनीनाम् ॥ १७॥
स्वजनविभवजीवितक्षयं जनयति वज्रमनिष्टलक्षणम् ।
अशनिविषभयारिनाशनम् शुभमुप (उरु) भोगकरं च भूभृताम् ॥ १८॥

---

अध्याय ८० मुक्तालक्षणाध्यायः
द्विपभुजगशुक्तिशंखाभ्रवेणुतिमिसूकरप्रसूतानि ।
मुक्ताफलानि तेषां बहुसाधु च शुक्तिजं भवति ॥ १॥
सिंहलकपारलौकिकसौराष्ट्रकताम्रपर्णिपारशवाः ।
कौबेरपाण्ड्यवाटकहैमा इत्याकाराः त्व (हि) अष्टौ ॥ २॥
बहुसंस्थानाः स्निग्धाः (स्निग्धा) हंसाभाः सिंहलाकराः स्थूलाः ।
ईषत्ताम्राः श्वेताः तमोवियुक्ताश्च ताम्राख्याः ॥ ३॥
कृष्णाः श्वेताः पीताः सशर्कराः पारलौकिका विषमाः ।
न स्थूला नात्यल्पा नवनीतनिभाश्च सौराष्ट्राः ॥ ४॥
ज्योतिष्मत्यः (मन्तः) शुभ्रा गुरवोऽतिमहागुणाश्च पारशवाः ।

लघु जर्जरं दधिनिभं बृहद् द्विसंस्थानं (बृहद्विसंस्थानं) अपि हैमम् ॥ ५ ॥
विषमम् कृष्णश्वेतं (कृष्णम् श्वेतं) लघु कौबेरं प्रमाणतेजोवत् ।
निंबफलत्रिपुटधान्यकचूर्णाः स्युः पाण्ड्यवाटभवाः ॥ ६ ॥
अतसीकुसुमश्यामम् वैष्णवमेन्द्रं शशांकसंकाशम् ।
हरितालनिभं वारुणमसितं यमदैवतं भवति ॥ ७ ॥
परिणतदाडिमगुलिकागुञ्जाताम्रं च वायुदैवत्यम् ।
निर्धूमानलकमलप्रभं च विज्ञेयमाग्नेयम् ॥ ८ ॥
माषकचतुष्टयधृतस्यैकस्य शताहता त्रिपंचाशत् ।
कार्षापणा निगदिता मूल्यं तेजोगुणयुतस्य ॥ ९ ॥
माषकदलहान्यातो द्वात्रिंशद्विंशतिः त्रयोदश च ।
अष्टौ च शतानि शतत्रयं त्रिपंचाशता सहितम् ॥ १० ॥
पंचत्रिंशं शतमिति चत्वारः कृष्णला नवतिमूल्याः ।
सार्धाः तिस्रो गुञ्जाः सप्ततिमूल्यं धृतं रूपम् ॥ ११ ॥
गुञ्जात्रयस्य मूल्यं पंचाशद् रूपका गुणयुतस्य ।
रूपकपंचत्रिंशत्त्रयस्य गुञ्जार्धहीनस्य ॥ १२ ॥
पलदशभागो धरणं तद् यदि मुक्ताः त्रयोदश सुरूपाः ।
त्रिशती सपंचविंशा रूपकसंख्या कृतं मूल्यम् ॥ १३ ॥
षोडशकस्य द्विशती विंशतिरूपस्य सप्ततिः सशता ।
यत्पंचविंशतिधृतं तस्य शतं त्रिंशता सहितम् ॥ १४ ॥
त्रिंशत्सप्ततिमूल्यं चत्वारिंशच्छतार्धमूल्यं (मूल्या) च ।
षष्टिः पंचोना वा धरणम् पंचाष्टकं मूल्यम् ॥ १५ ॥
मुक्ताशीत्या त्रिंशच्छतस्य सा पंचरूपकविहीना ।
द्वित्रिचतुःपंचशता द्वादशषट्पंचकत्रितयम् ॥ १६ ॥
पिक्कापिच्चार्घार्धा रवकः सिक्थं त्रयोदशाद्यानाम् ।
संज्ञाः परतो निगराश्चूर्णाश्चाशीतिपूर्वाणाम् ॥ १७ ॥
एतद्गुणयुक्तानां धरणधृतानां प्रकीर्तितं (प्रकीतितं) मूल्यम् ।
परिकल्प्यमन्तराले हीनगुणाणां क्षयः कार्यः ॥ १८ ॥
कृष्णश्वेतकपीतकताम्राणामीषदपि च विषमाणाम् ।
त्र्यंशोनम् विषमकपीतयोश्च षड्भागदलहीनम् ॥ १९ ॥
ऐरावतकुलजानां पुष्यश्रवणेन्दुसूर्यदिवसेषु ।
ये चोत्तरायणभवा ग्रहणेऽर्केन्द्वोश्च भद्रेभाः ॥ २० ॥
तेषां किल जायन्ते मुक्ताः कुंभेषु सरदकोशेषु ।
बहवो बृहत्प्रमाणा बहुसंस्थानाः प्रभायुक्ताः ॥ २१ ॥
नैषामर्घः कार्यो न च वेधोऽतीव ते प्रभायुक्ताः ।
सुतविजयारोग्यकरा महापवित्रा धृता राज्ञाम् ॥ २२ ॥
दंष्ट्रामूले शशिकान्तिसप्रभं बहुगुणं च वाराहम् ।
तिमिजं मत्स्याक्षिनिभं बृहत् पवित्रं बहुगुणं च ॥ २३ ॥
वर्षौपलवज्जातं वायुस्कन्धाग सप्तमाद् भ्रष्टम् ।
ह्रियते किल खाद् दिव्यैः तडित्प्रभवं मेघसंभूतम् ॥ २४ ॥
तक्षकवासुकिकुलजाः कामगमा ये च पन्नगाः तेषाम् ।
स्निग्धा नीलद्युतयो भवन्ति मुक्ताः फणस्यान्ते ॥ २५ ॥
शस्तेऽवनिप्रदेशे रजतमये भाजने स्थिते च यदि ।
वर्षति देवोऽकस्मात् तज्ज्ञेयं नागसंभूतम् ॥ २६ ॥
अपहरति विषमलक्ष्मीं क्षपयति शत्रून् यशो विकाशयति ।
भौजंगं नृपतीनां धृतमकृतार्घं विजयदं च ॥ २७ ॥
कर्पूरस्फटिकनिभं चिपिटं विषमं च वेणुजं ज्ञेयम् ।
शंखोद्भवं शशिनिभं वृत्तं भ्राजिष्णु रुचिरं च ॥ २८ ॥
शंखतिमिवेणुवारणवराहभुजगाभ्रजान्यवेद्यानि (वैध्यानि) ।
अमितगुणत्वागैषामर्घः शास्त्रे न निर्दिष्टः ॥ २९ ॥
एतानि सर्वाणि महागुणानि
सुतार्थसौभाग्ययशस्कराणि ।
रुक्षोकहन्तीणि च पार्थिवानां
मुक्ताफलानीप्सितकामदानि ॥ ३० ॥
सुरभूषणं लतानां सहस्रमष्टोत्तरं चतुर्हस्तम् ।
इन्दुच्छन्दो (इन्द्रच्छन्दो) नाम्ना विजयच्छन्दः तदर्धेन ॥ ३१ ॥
शतमष्टयुतं हारो देवच्छन्दो ह्यशीतिः एकयुता ।
अष्टाष्टकोऽर्धहारो रश्मिकलापश्च नवषट्कः ॥ ३२ ॥
द्वात्रिंशता तु गुच्छो विंशत्या कीर्तितोऽर्धगुच्छाख्यः ।
षोडशभिः माणवको द्वादशभिश्चार्धमाणवकः ॥ ३३ ॥
मन्दरसंज्ञोऽष्टाभिः पंचलता हारफलकमित्युक्तम् ।
सप्ताविंशतिमुक्ता हस्तो नक्षत्रमालेति ॥ ३४ ॥
अन्तरमणिसंयुक्ता मणिसोपानं सुवर्णगुलिकैः वा ।
तरलकमणिमध्यं तद्विज्ञेयं चाटुकारमिति ॥ ३५ ॥
एकावली नाम यथेष्टसंख्या
हस्तप्रमाणा मणिविप्रयुक्ता ।
संयोजिता या मणिना तु मध्ये
यष्टीति सा भूषणविद्भिरुक्तम् ॥ ३६ ॥

---

अध्याय ८१ पद्मरागलक्षणाद्यायः
सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसंभूतिः (पद्मरागो सं) ।
सौगन्धिकजा भ्रमराञ्जनाब्जजंबूरसद्युतयः ॥ १ ॥
कुरुविन्दभवाः शबला मन्दद्युतयश्च धातुभिः विद्धाः ।
स्फटिकभवा द्युतिमन्तो नानावर्णा विशुद्धाश्च ॥ २ ॥
स्निग्धः प्रभानुलेपी स्वच्छोऽर्चिष्मान् गुरुः सुसंस्थानः ।
अन्तःप्रभोऽतिरागो (अतिरागा) मणिरत्नगुणाः समस्तानाम् ॥ ३ ॥
कलुषा मन्दद्युतयो लेखाकीर्णाः सधातवः खण्डाः ।
दुर्विद्धा न मनोज्ञाः सशर्कराश्चेति मणिदोषाः ॥ ४ ॥
भ्रमरशिखिकण्ठवर्णो दीपशिखासप्रभो भुजंगानाम् ।
भवति मणिः किक मूर्धनि योऽनर्घेयः स विज्ञेयः ॥ ५ ॥
यः तं बिभर्ति मनुजाधिपतिः न तस्य
दोषा भवन्ति विषरोगकृताः कदाचित् ।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः
शत्रूंश्च नाशयति तस्य मणेः प्रभावात् ॥ ६ ॥
षड्विंशतिः सहस्राणि एकस्य मणेः पलप्रमाणस्य ।
कर्षत्रयस्य विंशतिरुपदिष्टा पद्मरागस्य ॥ ७ ॥
अर्धपलस्य द्वादश कर्षस्य एकस्य षट्सहस्राणि ।
यगाष्टमाषकधृतं तस्य सहस्रत्रयं मूल्यम् ॥ ८ ॥
माषकचतुष्टयं दशशतक्रयं द्वौ तु पंचशतमूल्यौ ।

परिकल्प्यमन्तराले मूल्यं हीनाधिकगुणानाम् ॥ ९॥
वर्णन्यूनस्यार्धं तेजोहीनस्य मूल्यमष्टांशम् ।
अल्पगुणो बहुदोषो मूल्यात् प्राप्नोति विंशांशम् ॥ १०॥
आधूम्रं व्रणबहुलं स्वल्पगुणं चाप्नुयाद् द्विशतभागम् ।
इति पद्मरागमूल्यं पूर्वाचार्यैः समुद्दिष्टम् ॥ ११॥

---

अध्याय ८२ मरकतलक्षणाध्यायः ।
शुकवंशपत्रकदलीशिरीषकुसुमप्रभं गुणोपेतम् ।
सुरपितृकार्ये मरकतं (रकतं) अतीव शुभदं नृणां विहितं (विधृतं) ॥ १॥

---

अध्याय ८३ दीपलक्षणाध्यायः
वामावर्तो मलिनकिरणः सस्फुलिंगोऽल्पमूर्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्यन्वितोऽपि ।
दीपः पापं कथयति फलं शब्दवान् वेपनश्च
व्याकीर्णार्चिः विशलभमरुद्यश्च नाशं प्रयाति ॥ १॥
दीपः संहतमूर्तिः आयततनुः निर्वेपनो दीप्तिमान
निःशब्दो रुचिरः प्रदक्षिणगतिः वैदूर्य (वैडूर्य) हेमद्युतिः ।
लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं (रुचिरं, सुचिरं) यश्चौद्यतं दीप्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः ॥ २॥

---

अध्याय ८४ दन्तकाष्ठलक्षणाध्यायः
वल्लीलतागुल्मतरुप्रभेदैः
स्युः दन्तकाष्ठानि सहस्रशो यैः ।
फलानि वाच्यानि अथ (अति) तत्प्रसंगो
मा भूदतो वच्म्यथ कामिकानि ॥ १॥
अज्ञातपूर्वाणि न दन्तकाष्ठान्यस्
अद्यान् न पत्रैश्च समन्वितानि ।
न युग्मपर्वाणि न पाटितानि
न च ऊर्ध्वशुष्काणि विना त्वचा च ॥ २॥
वैकन्तकश्रीफलकाश्मरीषु
ब्राह्मी द्युतिः क्षेमतरौ सुदाराः ।
वृद्धिः वटेऽर्के प्रचुरं च तेजः
पुत्रा मधूके सगुणाः (ककुभे) प्रियत्वम् ॥ ३॥
लक्ष्मीः शिरीषे च तथा करञ्जे
प्लक्षेऽर्थसिद्धिः समभीप्सिता स्यात् ।
मान्यत्वमायाति जनस्य जात्यां
प्राधान्यमश्वत्थतरौ वदन्ति ॥ ४॥
आरोग्यमायुः बदरीबृहत्योः
ऐश्वर्यवृद्धिः खदिरे सबिल्वे ।
द्रव्याणि चैष्टानि अतिमुक्तके स्युः
प्राप्नोति तानि एव पुनः कदंबे ॥ ५॥
नीपे (निंबे) ऽर्थाप्तिः करवीरेऽन्नलब्धिः
भाण्डीरे स्यादन्नमेवं (इदमेव) प्रभूतम् ।
शम्यां शत्रून् अपहन्त्यर्जुने च
श्यामायां च द्विषतामेव नाशः ॥ ६॥
शालेऽश्वकर्णे च वदन्ति गौरवं
सभद्रदारावपि चाटरूषके ।
वाल्लभ्यमायाति जनस्य सर्वतः
प्रियंगुअपामार्गसजंबुदाडिमैः ॥ ७॥
उदन्मुखः प्रान्मुख एव वाब्दं
कामं यथेष्टंयथेष्टं) हृदये निवेश्य ।
अद्यादनिन्दन् (अनिन्द्यं) च सुखोपविष्टः
प्रक्षाल्य जह्याग शुचिप्रदेशे ॥ ८॥
अभिमुखपतितं प्रशान्तदिक्स्थं
शुभमतिशोभनमूर्ध्वसंस्थितं यत् ।
अशुभकरमतोऽन्यथा प्रदिष्टं
स्थितपतितं च करोति मृष्टमन्नम् ॥ ९॥

---

अध्याय ८५ शाकुनाध्यायः
यत्शक्रशुक्र (शुक्रशक्र) वागीशकपिष्ठलगरुत्मताम् ।
मतेभ्यः प्राह ऋषभो भागुरेः देवलस्य च ॥ १॥
भारद्वाजमतं दृष्ट्वा यग श्रीद्रव्यवर्धनः ।
आवन्तिकः प्राह नृपो महाराजाधिराजकः ॥ २॥
सप्तर्षीणां मतं यग संस्कृतं प्राकृतं च यत् ।
यानि चौक्तानि गर्गाद्यैः यात्राकारैश्च भूरिभिः ॥ ३॥
तानि दृष्ट्वा चकारैमं सर्वशाकुनसंग्रहम् ।
वराहमिहिरः प्रीत्या शिष्याणां ज्ञानमुत्तमम् ॥ ४॥
अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत् तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ ५॥
ग्रामारण्यांबुभूव्योमद्युनिशोभयचारिणः ।
रुतयातेक्षितोक्तेषु ग्राह्याः पुंस्त्रीनपुंसकाः (स्त्रीपुन्नपुंसकाः) ॥ ६॥
पृथग् जात्यनवस्थानादेषां व्यक्तिः न लक्ष्यते ।
सामान्यलक्षणोद्देशे श्लोकावृषिकृताविमौ ॥ ७॥
पीनौन्नतविकृष्टांसाः पृथुग्रीवाः सुवक्षसः ।
स्वल्पगंभीरविरुताः पुंआंसः स्थिरविक्रमाः ॥ ८॥
तनूरस्कशिरोग्रीवाः सूक्ष्मास्यपदविक्रमाः ।
प्रसक्तमृदुभाषिण्यः स्त्रियोऽतोऽन्यन् नपुंसकम् ॥ ९॥
ग्रामारण्यप्रचाराद्यं लोकादेवोपलक्षयेत् ।
संचिक्षिप्सुः अहं वच्मि यात्रामात्रप्रयोजनम् ॥ १०॥
पथ्यात्मानं नृपं सैन्ये पुरे चौद्दिश्य देवताम् ।
सार्थे प्रधानं साम्ये (साम्यं) स्याज्जातिविद्यावयोऽधिकम् ॥ ११॥
मुक्तप्राप्तैष्यदर्कासु फलं दिक्षु तथाविधम् ।
अंगार (अग्गारि) दीप्तधूमिन्यः ताश्च शान्ताः ततोऽपराः (ऽपरा, अपराः) ॥ १२॥
तत्पंचमदिशां तुल्यं शुभं त्रिकाल्यमादिशेत् ।
परिशेष (परिशेषयोः) दिशोः वाच्यं यथासन्नं शुभाशुभम् ॥ १३॥
शीघ्रमासन्ननिम्नस्थैश्चिरादुन्नतदूरगैः ।
स्थानवृद्ध्युपघाताग तद्वद् ब्रूयात् फलं पुनः ॥ १४॥
क्षणतिथ्युडुवातार्कैः देवदीप्तो यथोत्तरम् ।
क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ॥ १५॥

दशधैवं प्रशान्तोऽपि सौम्यः तृणफलाशनः ।
मांसामेध्याशने रौद्रो विमिश्रोऽन्नाशनः स्मृतः ॥ १६ ॥
हर्म्यप्रासादमंगल्यमनोज्ञस्थानसंस्थिताः ।
श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च ॥ १७ ॥
स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः ।
क्लीबस्त्रीपुरुषा ज्ञेया (पुरुशाश्च एषां) बलिनः स्युः यथोत्तरम् ॥ १८ ॥
जवजातिबलस्थानहर्षसत्त्वस्वरान्विताः ।
स्वभूमावनुलोमाश्च तदूनाः स्युः विवर्जिताः ॥ १९ ॥
कुक्कुटैभपिरिल्यश्च शिखिवञ्जुलछिक्कराः ।
बलिनः सिंहनादश्च कूटपूरी च पूर्वतः ॥ २० ॥
क्रोष्टुकौलूकहारीतकाककोकऋक्षपिंगलाः ।
कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥ २१ ॥
गोशशक्रौंचलोमाशहंसौत्क्रोशकपिञ्जलाः ।
विडालौत्सववादित्रगीतहासाश्च वारुणाः ॥ २२ ॥
शतपत्रकुरंगाखुमृगएकशफकोकिलाः ।
चाषशल्यकपुण्याहघण्टाशंखरवा उदक् ॥ २३ ॥
न ग्राम्योऽरण्यगो ग्राह्यो नारण्यो ग्राम्यसंस्थितः (ग्रामसंस्थितः) ।
दिवाचरो न शर्वर्यां न च नक्तंचरो दिवा ॥ २४ ॥
द्वन्द्वरोगार्दितत्रस्ताः कलहामिषकांक्षिणः
आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥ २५ ॥
रोहिताश्वाजवालेयाः कुरंग (वालेयकुरंग) उष्ट्रमृगाः शशः ।
निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलौ ॥ २६ ॥
न तु भाद्रपदे ग्राह्याः सूकरश्ववृकादयः ।
शारद्य (शरद्य) अब्जादगोक्रौंचाः श्रावणे हस्तिचातकौ ॥ २७ ॥
व्याघ्रऋक्षवानरद्वीपिमहिषाः सबिलेशयाः ।
हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानुषाः ॥ २८ ॥
एन्द्रानलदिशोः मध्ये त्रिभागेषु व्यवस्थिताः ।
कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् ॥ २९ ॥
शिल्पी भिक्षुः विवस्त्रा स्त्री याम्यानलदिगन्तरे ।
परतश्चापि मातंगगोपधर्मसमाश्रयाः ॥ ३० ॥
नैरृतीवारुणीमध्ये प्रमदासूतितस्कराः ।
शौण्डिकः शाकुनी हिंस्रो वायव्या (वायव्य) पश्चिमान्तरे ॥ ३१ ॥
विषघातकगोस्वामिकुहकज्ञाः ततः परम् ।
धनवानीक्षणीकश्च मालाकारः परं ततः ॥ ३२ ॥
वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः ।
द्वात्रिंशदेवं (एवं द्वात्रिंशतो) भेदाः स्युः पूर्वदिग्भिः सहोदिताः ॥ ३३ ॥
राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
राजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥ ३४ ॥
गच्छतः तिष्ठतो वापि दिशि यस्यां व्यवस्थितः ।
विरौति शकुनो वाच्यः तद्दिग्जेन समागमः ॥ ३५ ॥
भिन्नभैरवदीनार्तपरुषक्षामजर्जराः ।
स्वना (स्वरा) नैष्टाः शुभाः शान्त (शान्ता) हृष्टप्रकृतिपूरिताः ॥ ३६ ॥
शिवा श्यामा रला छुच्छुः पिंगला गृहगोधिका ।
सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥ ३७ ॥
स्त्रीसंज्ञा भासभषककपिश्रीकर्णधिक्कराः (छिक्कराः) ।
शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥ ३८ ॥
क्ष्वेडास्फोटितपुण्याहगीतशंखांबुनिःस्वनाः ।
सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥ ३९ ॥
ग्रामौ मध्यमषड्जौ तु गान्धारश्चेति शोभनाः ।
षड्ज (षड्जा) मध्यमगान्धारा ऋषभश्च स्वरा हिताः ॥ ४० ॥
रुतकीर्तनदृष्टेषु भारद्वाजाजबर्हिणः ।
धन्या नकुलचाषौ च सरटः पापदोऽग्रतः ॥ ४१ ॥
जाहकाहिशशक्रोडगोधानां कीर्तनं शुभम् ।
रुतं सन्दर्शनं (रतसन्दर्शनं) नैष्टं प्रतीपं वानरऋक्षयोः ॥ ४२ ॥
ओजाः प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः ।
चाषः सनकुलो वामो भृगुः आहापराह्नतः ॥ ४३ ॥
छिक्करः कुटपूरी च पिरिली चाह्नि दक्षिणाः ।
अपसव्याः सदा शस्ता दंष्ट्रिणः सबिलेशयाः ॥ ४४ ॥
श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे ।
कन्यकादधिनी पश्चादुदग्गोविप्रसाधवः ॥ ४५ ॥
जालश्वचरणौ नैष्टौ प्राग्याम्यौ शस्त्रघातकौ ।
पश्चादासवषण्ढौ च खलासनहलानि उदक् ॥ ४६ ॥
कर्मसंगमयुद्धेषु प्रवेशे नष्टमार्गणे ।
यानव्यस्तगता ग्राह्या विशेषश्चात्र वक्ष्यते ॥ ४७ ॥
दिवा प्रस्थानवद् ग्राह्याः कुरंगरुरुवानराः ।
अह्नश्च प्रथमे भागे चाषवञ्जुलकुक्कुटाः ॥ ४८ ॥
पश्चिमे शर्वरीभागे नप्तृकोलूकपिंगलाः ।
सर्व एव विपर्यस्ता ग्राह्याः सार्थेषु योषिताम् ॥ ४९ ॥
नृपसन्दर्शने ग्राह्यः प्रवेशेऽपि प्रयाणवत् ।
गिर्यरण्यप्रवेशेषु (प्रवेशे च) नदीनां चावगाहने ॥ ५० ॥
वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ ।
क्रियादीप्तौ विनाशाय यातुः परिघसंज्ञितौ ॥ ५१ ॥
तावेव तु यथाभागं प्रशान्तरुतचेष्टितौ ।
शकुनौ शकुनद्वारसंज्ञितावर्थसिद्धये ॥ ५२ ॥
केचित् तु शकुनद्वारमिच्छन्त्युभयतः स्थितैः ।
शकुनैः एकजातीयैः शान्तचेष्टाविराविभिः ॥ ५३ ॥
विसर्जयति यद्येक एकश्च प्रतिषेधति ।
स विरोधोऽशुभो यातुः ग्राह्यो यो (वा) बलवत्तरः ॥ ५४ ॥
पूर्वं प्राविशिको (प्रावेशिको) भूत्वा पुनः प्रास्थानिको भवेत् ।
सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययात् (तद्विपर्ययः) ॥ ५५ ॥
विसर्ज्य शकुनः पूर्वं स एव निरुणद्धि चेत् ।
प्राह यातुः अरेः मृत्युं डमरं रोगमेव वा ॥ ५६ ॥
अपसव्याः तु शकुना दीप्ता भयनिवेदिनः ।

आरंभे शकुनो दीप्तो वर्षान्तः तद्भयंकरः ॥ ५७॥
तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम् ।
धनसैन्यबलांगेष्टकर्मणां स्युः भयंकराः ॥ ५८॥
जीमूतध्वनिदीप्तेषु भयं भवति मारुतात् ।
उभयोः सन्ध्ययोः दीप्ताः शस्त्रोद्भवभयंकराः ॥ ५९॥
चितिकेशकपालेषु मृत्युबन्धवधप्रदाः ।
कण्टकीकाष्ठभस्मस्थाः कलहायासदुःखदाः ॥ ६०॥
अप्रसिद्धिं भयं वापि निःसाराश्मव्यवस्थिताः ।
कुर्वन्ति शकुना दीप्ताः शान्ता याप्यफलाः तु ते ॥ ६१॥
असिद्धिसिद्धिदौ ज्ञेयौ निर्हाराहार (निर्हादाहार) कारिणौ ।
स्थानाद् रुवन् व्रजेद् यात्रां शंसते त्वन्यथागमम् ॥ ६२॥
कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः ।
उच्चमादौ स्वरं कृत्वा नीचं पश्चाग दोषकृत् (मोषकृत्) ॥ ६३॥
एकस्थाने रुवन् दीप्तः सप्ताहाद् ग्रामघातकः (ग्रामघातकृत्) ।
पुरदेशनरेन्द्राणामृत्वर्धायनवत्सरात्
सर्वे दुर्भिक्षकर्तारः स्वजातिपिशिताशिनः (अशनाः) ॥ ६४॥
सर्पमूषकमार्जारपृथुलोम (रोम) विवर्जिताः ॥ ६५॥
परयोनिषु गच्छन्तो मैथुनं देशनाशनाः ।
अन्यत्र वेसरोत्पत्तेः नृणां चाजातिमैथुनात् ॥ ६६॥
बन्धघातभयानि स्युः पाद ऊरूमस्तकान्तिगैः ।
शष्पापः (अपशष्प) पिशितान्नादैः दोषवर्षक्षय (वर्षमोषक्षत) ग्रहाः ॥ ६७॥
क्रूरौग्रदोषदुष्टैश्च प्रधाननृपवृत्तकैः ।
चिरकालेन (चिरकालैश्च) दीप्ताद्यास्वागमो दिक्षु तन्नृणाम् ॥ ६८॥
सद्रव्यो बलवांश्च स्यात् सद्रव्यस्यागमो भवेत् ।
द्युतिमान् विनतप्रेक्षी सौम्यो दारुणवृत्तकृत् ॥ ६९॥
विदिक्स्थः शकुनो दीप्तो वामस्थेनानुवाशितः ।
स्त्रियाः संग्रहणं प्राह तद्दिगाख्यातयोनितः ॥ ७०॥
शान्तः पंचमदीप्तेन विरुतो विजयावहः ।
दिग्नरागमकारी वा दोषकृत् तद्विपर्यये ॥ ७१॥
वामसव्यगतो (रुतो) मध्यः प्राह स्वपरयोः भयम् ।
मरणं कथयन्ति एते सर्वे समविराविणः ॥ ७२॥
वृक्षाग्रमध्यमूलेषु गजाश्वरथिकागमः ।
दीर्घाब्जमुषिताग्रेषु नरनौशिबिकागमः ॥ ७३॥
शकटेनौन्नतस्थे वा (च) छायास्थे छत्रसंयुते (छत्रसम्युतः) ।
एकत्रिपंचसप्ताहात् पूर्वाद्यास्वन्तरासु च ॥ ७४॥
सुरपतिहुतवहयमनिरृतिवरुणपवनेन्दुसंकराः क्रमशः ।
प्राच्याद्यानां पतयो दिशः पुमांसो अंगना विदिशः ॥ ७५॥
तरुतालीवदलांबरसलिलजशरचर्मपट्टलेखाः स्युः ।
द्वात्रिंशत्परविभक्ते दिक्चक्रे तेषु कार्याणि ॥ ७६॥
व्यायामशिखिनिकूजितकलहांभोनिगडमन्त्रगोशब्दाः ।
वर्णाः तु (च) रक्तपीतककृष्णसिताः कोणगा मिश्राः ॥ ७७॥
चिह्नं ध्वजो दग्धमथ श्मशानं
दरी जलं पर्वतयज्ञघोषाः ।
एतेषु संयोगभयानि विन्द्याद्
अन्यानि वा स्थानविकल्पितानि ॥ ७८॥
स्त्रीणां विकल्पा बृहती कुमारी
व्यंगा विगन्धा त्वथ नीलवस्त्रा ।
कुस्त्री प्रदीर्घा विधवा च ताश्च
संयोगचिन्ता परिवेदिकाः स्युः ॥ ७९॥
पृच्छासु रूप्यकनकातुरभामिनीनां
मेषाव्ययानमखगोकुलसंश्रयासु ।
न्यग्रोधरक्ततरुरोध्रककीचकाख्याश
चूतद्रुमाः खदिरबिल्वनगार्जुनाश्च ॥ ८०॥

---

अध्याय ८६ शाकुनेऽन्तरचक्राध्यायः
एन्द्र्यां दिशि शान्तायां विरुवन् नृपसंश्रितागमं वक्ति ।
शकुनः (शकुनिः) पूजालाभं मणिरत्नद्रव्यसंप्राप्तिम् ॥ १॥
तदनन्तरदिशि कनकागमो भवेद् वांछितार्थसिद्धिश्च ।
आयुधधनपूगफलागमः तृईये भवेद् भागे ॥ २॥
स्निग्धद्विजस्य सन्दर्शनं चतुर्थे तथाहिताग्नेश्च ।
कोणेऽनुजीविभिक्षुप्रदर्शनं कनकलोहाप्तिः ॥ ३॥
याम्येनाद्ये नृपपुत्रदर्शनं सिद्धिः अभिमतस्याप्तिः ।
परतः स्त्रीधर्माप्तिः सर्षपयवलब्धिः अपि उक्ता ॥ ४॥
कोणागतुर्थखण्डे लब्धिः द्रव्यस्य पूर्वनष्टस्य ।
यद्वा तद्वा फलमपि यात्रायां प्राप्नुयाद् याता ॥ ५॥
यात्रासिद्धिः समदक्षिणेन शिखिमहिषकुक्कुटाप्तिश्च ।
याम्याद् द्वितीयभागे चारणसंगः शुभं प्रीतिः ॥ ६॥
ऊर्ध्वं सिद्धिः कैवर्तसंगमो मीनतित्तिराद्याप्तिः ।
प्रव्रजितदर्शनं तत्परे च पक्वान्नफललब्धिः ॥ ७॥
नैरृत्यां स्त्रीलाभः तुरगालंकारदूतलेखाप्तिः ।
परतोऽस्य चर्मतत्शिल्पिदर्शनं चर्ममयलब्धिः ॥ ८॥
वानरभिक्षुश्रवणावलोकनं नैरृतात् तृइतीयांशे ।
फलकुसुमदन्तघटितागमश्च कोणागतुर्थांशे ॥ ९॥
वारुण्यामर्णवजातरत्नवैदूर्य (वैडूर्य) मणिमयप्राप्तिः ।
परतोऽतः शबरव्याधचौरसंगः पिशितलब्धिः ॥ १०॥
परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः ।
आयुधपुस्तकलब्धिः तद्वृत्तिसमागमश्च ऊर्ध्वम् ॥ ११॥
वायव्ये फेनकचामर ऊर्णिकाप्तिः समेति कायस्थः ।
मृन्मयलाभोऽन्यस्मिन् वैतालिकडिण्डिभाण्डानाम् ॥ १२॥
वायव्याग तृतीये मित्रेण स्मागमो धनप्राप्तिः ।
वस्त्राश्वाप्तिः अतः परमिष्टसुहृत्संप्रयोगश्च ॥ १३॥
दधितण्डुललाजानां लब्धिरुदग् दर्शनं च विप्रस्य ।
अर्थावाप्तिः अनन्तरमुपगच्छति सार्थवाहश्च ॥ १४॥
वेश्यावटुदाससमागमः परे शुक्ल (शुष्क) पुष्पफललब्धिः ।
अत ऊर्ध्वं (अतः परं) चित्रकरस्य दर्शनं चित्रवस्त्राप्तिः (वस्त्रसंप्राप्तिः) ॥ १५॥
ऐशान्यां देवलकोपसंगमो धान्यरत्नपशुलब्धिः ।
प्राक् प्रथमे वस्त्राप्तिः समागमश्चापि बन्धक्या ॥ १६॥

रजकेन समायोगो जलजद्रव्यागमश्च परतोऽतः ।
हस्त्युपजीविसमाजश्चास्माद् धनहस्तिलब्धिश्च ॥ १७ ॥
द्वात्रिंशत्प्रविभक्तं दिक्चक्रं वास्तुवत् सनेम्युक्तं (वास्तुबन्धने अपि उक्तं) ।
अरनाभिस्थैः अन्तः फलानि नवधा विकल्प्यानि ॥ १८ ॥
नाभिस्थे बन्धुसुहृत्समागमः तुष्टिरुत्तमा भवति ।
प्राग्रक्तपट्टवस्त्रागमः त्वरे नृपतिसंयोगः ॥ १९ ॥
आग्नेये कौलिकतक्षपारिकर्मामाश्वसूतसंयोगः ।
लब्धिश्च तत्कृतानां द्रव्याणामश्वलब्धिः वा ॥ २० ॥
नेमीभागं बुद्धवा नाभीभागं च दक्षिणे योऽरः ।
धार्मिकजनसंयोगः तत्र भवेद् धर्मलाभश्च ॥ २१ ॥
उस्राक्रीडककापालिकागमो नैरृते समुद्दिष्टः ।
वृषभस्य चात्र लब्धिः माषकुलत्थाद्यमशनम् च ॥ २२ ॥
अपरस्यां दिशि योऽरः तत्रासक्तिः कृषीवलैः भवति ।
सामुद्रद्रव्यसुसारकाचफलमद्यलब्धिश्च ॥ २३ ॥
भारवहतक्षभिक्षुकसन्दर्शनमपि च वायुदिक्संस्थे ।
तिलककुसुमस्य लब्धिः सनागपुन्नागकुसुमस्य ॥ २४ ॥
कौबेर्यां दिशि योऽरः तत्रस्थो (शकुनः शान्तायां) वित्तलाभ्माख्याति ।
भागवतेन समागमनं (समागमं) आचष्टे पीतवस्त्रैश्च ॥ २५ ॥
ऐशाने व्रतयुक्ता वनिता सन्दर्शनं समुपयाति ।
लब्धिश्च परिज्ञेया कृष्णायःशस्त्र (कृष्णायोवस्त्र) घण्टानाम् ॥ २६ ॥
याम्येऽष्टांशे पश्चाद् द्विषट्त्रिसप्ताष्टमेषु मध्यफला ।
सौम्येन च द्वितीये शेषेष्वतिशोभना यात्रा ॥ २७ ॥
अभ्यन्तरे तु नाभ्यां शुभफलदा भवति षट्सु चारेषु ।
वायव्यानैरृतयोः अरयोः (उभय्योः) क्लेशावहा यात्रा ॥ २८ ॥
शान्तासु दिक्षु फलमिदमुक्तं दीप्तास्वतोऽभिधास्यामि ।
एन्द्रयां भयं नरेन्द्रात् सस्मागमश्चैव शात्रूणाम् ॥ २९ ॥
तदनन्तरदिशि नाशः कनकस्य भयं सुवर्णकाराणाम् ।
अर्थक्षयः तृतीये कलहः शस्त्रप्रकोपश्च ॥ ३० ॥
अग्निभयं च चतुर्थे भयमाग्नेये च भवति चौरेभ्यः ।
कोणादपि द्वितीये धनक्षयो नृपसुतविनाशः ॥ ३१ ॥
प्रमदागर्भविनाशः तृतीयभागे भवेगतुर्थे च ।
हैरण्यककारुकयोः प्रध्वंसः शस्त्रकोपश्च ॥ ३२ ॥
अथ पंचमे नृपभयं मारीमृतदर्शनं च वक्तव्यम् ।
षष्ठे तु भयं ज्ञेयं गन्धर्वाणां सडोंबानाम् ॥ ३३ ॥
धीवरशाकुनिकानां सप्तमभागाद् (भागे) भयं भवति पीप्ते ।
भोजनविघात उक्तो निरग्रअन्थभयं च तत्परतः ॥ ३४ ॥
कलहो नैरृतभागे रक्तस्रावोऽथ चर्मकारभयं (शस्त्रकोपश्च) ।
अपराद्ये चर्मकृतं विनश्यते चर्मकारभयम् ॥ ३५ ॥
तदनन्तरं (तदनन्तरे) परिव्राट्श्रवणभयं तत्परे त्वनशनभयम् ।
वृष्टिभयं वारुण्ये श्वतस्कराणां भयं परतः ॥ ३६ ॥
वायुग्रस्तविनाशः परे परे शस्त्रपुस्तवार्तानां (वार्त्तानां) ।
कोणे पुस्तकनाशः परे विषस्तेनवायुभयम् ॥ ३७ ॥
परतो वित्तविनाशो मित्रैः सह विग्रहश्च विज्ञेयः ।
तस्यासन्नेऽश्ववधो भयमपि च पुरोधसः प्रोक्तम् ॥ ३८ ॥
गोहरणशस्त्रघातावुदक् परे सार्थघातधननाशौ ।
आसन्ने च श्वभयं व्रात्यद्विजदासगणिकानाम् ॥ ३९ ॥
ऐशानस्यासन्ने चित्रांबरचित्रकृद्भयं प्रोक्तम् ।
ऐशाने त्वग्निभयं दूषणमपि उत्तमस्त्रीणाम् ॥ ४० ॥
प्राक् तस्यैवासन्ने दुःखोत्पत्तिः स्त्रिया विनाशश्च ।
भयमूर्ध्वं रजकानां विज्ञेयं काच्छिकानां च ॥ ४१ ॥
हस्त्यारोहभयं स्याद् द्विरदविनाशश्च मण्डलसमाप्तौ ।
अभ्यन्तरे तु दीप्ते पत्नीमरणं ध्रुवं पूर्वे ॥ ४२ ॥
शस्त्रानलप्रकोपाग्नेये वाजिमरणशिल्पिभयम् ।
याम्ये धर्मविनाशोऽपरे (विनाशः परे) ऽग्न्यवस्कन्दचोक्षवधाः ॥ ४३ ॥
अपरे तु कर्मिणां भयमथ कोणे चानिले खरौष्ट्रवधः ।
अत्रैव मनुष्याणां विसूचिका (विक्स्क्षूचिका) विषभयं भवति ॥ ४४ ॥
उदगर्थविप्रपीडा दिश्यैशान्यां तु चित्तसन्तापः ।
ग्रामीणगोपपीडा च तत्र नाभ्यां तथात्मवधः ॥ ४५ ॥

---

## अध्याय ८७ विरुताध्यायः

श्यामाश्येनशशघ्नवञ्जुलशिखिश्रीकर्णचक्राह्वयाश
चाषाण्डीरकखञ्जरीटकशुकध्वांक्षाः कपोताः त्रयः (त्रयाः) ।
भारद्वाजकुलालकुक्कुटखरा हारीतगृध्रौ कपिः
फेण्टः कुक्कुटपूर्णकूटचटकाः प्रोक्ता (चटकाश्च उक्ता) दिवासंचराः ॥ १ ॥
लोमाशिका पिंगलच्छिप्पिकाख्यौ
वल्गुल्युलूकौ शशकश्च रात्रौ ।
सर्वे स्वकालोत्क्रमचारिणः स्युः
देशस्य नाशाय नृपान्तदा वा ॥ २ ॥
हयनरभुजगौष्ट्रद्वीपिसिंहर्क्षगोधा
वृकनकुलकुरंगश्वाजगोव्याघ्रहंसाः ।
पृषतमृगशृगालश्वाविदाख्यान्यपुष्टा
द्युनिशमपि बिडालः सारसः सूकरश्च ॥ ३ ॥
भषकूटपूरिकुरबककरायिकाः पूर्णकूटसण्ज्ञाः स्युः ।
नामानि उलूकचेथ्याः पिंगलिका पेचिका हक्का ॥ ४ ॥
कपोतकी च श्यामा वञ्जुलकः कीर्त्यते खदिरचंचुः ।
छुच्छुन्दरी नृपसुता वालेयो गर्दभः प्रोक्तः ॥ ५ ॥
स्रोतः तडागभेद्य (भेद्येक) एकपुत्रकः कलहकारिका च रला ।
भृंगारवग विरुवति (वाशति) निशि भूमौ द्व्यंगुलशरीरा ॥ ६ ॥
दुर्बलिको भाण्डीकः प्राच्यानां दक्षिणः प्रशस्तोऽसौ ।
धिक्कारो मृगजातिः कृकवाकुः कुक्कुटः प्रोक्तः ॥ ७ ॥
गर्ताकुक्कुटकस्य प्रथितं तु कुलालकुक्कुटो नाम ।
गृहगोधिकेति संज्ञा विज्ञेया कुड्यमत्स्यस्य ॥ ८ ॥

दिव्यो धन्वन उक्तः क्रोडः स्यात् सूकरोऽथ गौरुस्रा ।
श्वा सारमेय उक्तो जात्या चटिका च सूकरिका ॥ ९ ॥
एवं देशे देशे तद्विद्भ्यः समुपलभ्य नामानि ॥ १० ॥
शकुनरुतज्ञानार्थं शास्त्रे संचित्य (संचिन्त्य) योज्यानि ॥ ११ ॥
वञ्जुलकरुतं तित्तिड इति दीप्तमथ किल्किलीति तत्पूर्णम् ।
श्येनशुकगृध्रकंकाः प्रकृतेः अन्यस्वरा दीप्ताः ॥ १२ ॥
यानासनशय्यानिलयनं कपोतस्य सद्मविशनं वा ।
अशुभप्रदं नराणां जातिविभेदेन कालोऽन्यः ॥ १३ ॥
आपाण्डुरस्य वर्षाग्नित्रकपोतस्य चैव षण्मासात् ।
कुंकुमधूम्रस्य फलं सद्यः पाकं कपोतस्य ॥ १४ ॥
चिचिदिति शब्दः पूर्णः श्यामायाः शूलिशूलिति च धन्यः ।
चच्चैति दीप्तः स्यात् स्वप्रियलाभाय (योगाय) चिक्चिग् इति ॥ १५ ॥
हारीतस्य तु शब्दो गुग्गुः पूर्णोऽपरे प्रदीप्ताः स्युः ।
स्वरवैचित्र्यं सर्वं भारद्वाज्याः शुभं प्रोक्तम् ॥ १६ ॥
किष्किषिशब्दः पूर्णः करायिकायाः शुभः कहकहैति ।
क्षमाय केवलं करकरैति न त्वर्थसिद्धिकरः ॥ १७ ॥
कोटुक्लीति क्षेम्यः स्वरः कुटुक्लीति वृष्टये तस्याः ।
अफलः कोटिकिलीति च दीप्तः खलु गुं कृतः शब्दः ॥ १८ ॥
शस्त्रं वामे दर्शनं दिव्यकस्य
सिद्धिः ज्ञेया हस्तमात्रौच्छ्रितस्य ।
तस्मिन्न् एव प्रोन्नतस्थे शरीराद्
धात्री वश्यं सागरान्तराभ्युपैति ॥ १९ ॥
फणितोऽभिमुखागमोऽरिसंगं
कथयति बन्धुवधात्ययं च यातुः ।
अथवा समुपैति सव्यभागात्
न स सिद्धयै कुशलो गमागमे च ॥ २० ॥
अब्जेषु मूर्धसु च वाजिगजौरगाणां
राज्यप्रदः कुशलकृत्शुचिशाद्वलेषु ।
भस्मास्थिकाष्ठतुषकेशतृणेषु दुःखं
दृष्टः करोति खलु खञ्जनकोऽब्दमेकम् ॥ २१ ॥
किलिकिल्किलि तित्तिरस्वनः
शान्तः शस्तफलोऽन्यथापरः ।
शशको निशि वामपार्श्वगो
वाशन् शस्तफलो निगद्यते ॥ २२ ॥
किलिकिलिविरुतं कपेः प्रदीप्तं
न शुभफलप्रदमुद्दिशन्ति यातुः ।
शुभमपि कथयन्ति चुग्लुशब्दं
कपिसदृशं च कुलालकुक्कुटस्य ॥ २३ ॥
पूर्णाननः कृमिपतंगपिपीलकाद्यैश
चाषः प्रदक्षिणमुपैति नरस्य यस्य ।
खे स्वस्तिकं यदि करोत्यथवा यियासोः
तस्यार्थलाभमचिरात् सुमहत् करोति ॥ २४ ॥
चाषस्य काकेन विरुध्यतश्चेत्
पराजयो दक्षिणभागगस्य ।
वधः प्रयातस्य तदा नरस्य
विपर्यये तस्य जयः प्रदिष्टः ॥ २५ ॥
केकेति पूर्णकुटवद् यदि वामपार्श्वे
चाषः करोति विरुतं जयकृत् तदा स्यात् ।
क्रेक्रेति (क्रकेति) तस्य विरुतं न शिवाय दीप्तं
सन्दर्शनं शुभदमस्य सदैव यातुः ॥ २६ ॥
अण्डीरकष्टीति रुतेन पूर्णष-
टिट्टिट्टिशब्देन तु दीप्त उक्तः ।
फेण्टः शुभो दक्षिणभागसंस्थो
न वाशिते तस्य कृतो विशेषः ॥ २७ ॥
श्रीकर्णरुतं तु दक्षिणे
क्वक्वक्वैति शुभं प्रकीर्तितम् ।
मध्यं खलु चिक्चिकीति यच्
शेषं सर्वमुशन्ति निष्फलम् ॥ २८ ॥
दुर्बलेः अपि चिरिल्विरिल्विति
प्रोक्तमिष्टफलदं हि वामतः ।
वामतश्च यदि दक्षिणं व्रजेत्
कार्यसिद्धिमचिरेण यच्छति ॥ २९ ॥
चिक्चिकिवाशितमेव तु कृत्वा
दक्षिणभागमुपैति तु वामात् ।
क्षेमकृदेव न साधयतेऽर्थान्
व्यत्ययगो वधबन्धभयाय ॥ ३० ॥
क्रकेति च सारिका द्रुतं त्रेत्रे वाप्यभया विरौति या ।
सा वक्ति यियासतोऽचिराद् गात्रेभ्यः (गात्रेभ्य) क्षतजस्य विस्रुतिम् ॥ ३१ ॥
फेण्टकस्य वामतश्चिरिल्विरिल्विति स्वनः ।
शोभनो निगद्यते प्रदीप्त उच्यतेऽपरः ॥ ३२ ॥
श्रेष्ठं खरं स्थास्नुमुशन्ति वामम्
ओंकारशब्देन हितं च यातुः ।
अतोऽपरं (अतः परं) गर्दभनादितं यत्
सर्वाश्रयं तत् प्रवदन्ति दीप्तम् ॥ ३३ ॥
आकाररावी समृगः कुरंग
ओकाररावी पृषतश्च पूर्णः ।
येऽन्ये स्वराः ते कथिताः प्रदीप्ताः
पूर्णाः शुभाः पापफलाः प्रदीप्ताः ॥ ३४ ॥
भीता रुवन्ति कुकुकुक्विति ताम्रचूडाः
त्यक्त्वा रुतानि भयदानि अपराणि रात्रौ ।
स्वस्थैः स्वभावविरुतानि निशावसाने
ताराणि राष्ट्रपुरपार्थिववृद्धिदानि ॥ ३५ ॥
नानाविधानि विरुतानि हि छिप्पिकायाः
तस्याः शुभाः कुलुकुलुः न शुभाः तु शेषाः ।
यातुः बिडालविरुतं न शुभं सदैव
गोः तु क्षुतं मरणमेव करोति यातुः ॥ ३६ ॥
हुंहुंगुग्लुग् इति प्रियामभिलषन् क्रोशत्युलूको मुदा
पूर्णः स्याद् गुरुलु प्रदीप्तमपि च ज्ञेयं सदा किस्किसि ।
विज्ञेयः कलहो यदा बलबलं तस्य (तस्याः) असकृद्वाशितं

दोषायैव टटट्टटैति न शुभाः शेषाः तु दीप्त (दीप्ताः) स्वराः ॥ ३७ ॥
सारसकूजितमिष्टफलं तद् यद् युगपद्विरुतं मिथुनस्य ।
एकरुतं न शुभं यदि वा स्यादेकरुते प्रविरौति (प्रतिरौति) चिरेण ॥ ३८ ॥
चिरिल्विरिल्विति स्वरैः शुभं करोति पिंगलाः (पिंगला) ।
अतोऽपरे तु ये स्वराः प्रदीप्तसंज्ञिताः तु ते ॥ ३९ ॥
इशिविरुतं गमनप्रतिषेधि
कुशुकुशु चेत् कलहं प्रकरोति ।
अभिमतकार्यगतिं च यथा सा
कथयति तं च विधिं कथयामि ॥ ४० ॥
दिनान्तसन्ध्यासमये निवासम्
आगम्य तस्याः प्रयतश्च वृक्षम् ।
देवान् समभ्यर्च्य पितामहादीन्
नवांबरः तं च तरुं सुगन्धैः ॥ ४१ ॥
एको निशीथेऽनलदिक्स्थितश्च
दिव्येतरैः तां शपथैः नियोज्य ।
पृच्छेद् यथाचिन्तितमर्थमेवम्
अनेन मन्त्रेण यथाशृणोति ॥ ४२ ॥
(मन्त्र)
विद्धिभद्रे मया यत् त्वमिममर्थं प्रचोदिता ।
कल्याणि सर्ववचसां वेदित्री त्वं प्रकीर्त्यसे ॥ ४३ ॥
आपृच्छेऽद्य गमिष्यामि वेदितश्च पुनः त्वहम् ।
प्रातः आगम्य पृच्छे त्वामाग्नेयीं दिशमाश्रितः ॥ ४४ ॥
प्रचोदयाम्यहं यत् त्वां तन् मे व्याख्यातुमर्हसि ।
स्वचेष्टितेन कल्याणि यथा वेद्मि निराकुलम् ॥ ४५ ॥
इत्येवमुक्ते तरुमूर्धगायाश
चिरिल्विरिल्वीति रुतेऽर्थसिद्धिः ।
अत्याकुलत्वं दिशिकारशब्दे
कुचाकुचा इत्येवमुदाहृते वा ॥ ४६ ॥
अवाक्प्रदाने ऽपि हित (विहित) अर्थसिद्धिः
पूर्वोक्तदिक्चक्रफलैः अतोऽन्यत् ।
वाच्यं फलं चोत्तममध्यनीच-
शाखास्थितायां वरमध्यनीचम् ॥ ४७ ॥
दिन्मन्दलेऽभ्यन्तरबाह्यभागे
फलानि विन्द्याद् गृहगोधिकायाः ।
छुच्छुन्दरी चिच्चिड इति प्रदीप्ता
पूर्णा तु सा तित्तिड इति स्वनेन ॥ ४८ ॥

---

## अध्याय ८८ श्वचक्राध्यायः

नृतुरगकरिकुंभपर्याणसक्षीरवृक्षेष्टकासंचय-च्छत्रशय्यासनौलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं -
यदा श्वावमूत्र्याग्रतो याति यातुः तदा कार्यसिद्धिः भवेदार्द्रके गोमये -
मिष्टभोज्यागमः शुष्कसम्मूत्रणे शुष्कमन्नं गुडो
मोदकावाप्तिः एवाथवा ।
अथ विषतरुकण्ठकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि -
मूत्र्यावहत्यथवा यायिनोऽग्रे सरोऽनिष्टमाख्याति
शय्याकुलालादि भाण्डानि -
अभुक्तानि अभिन्नानि वा मूत्रयन्
कन्यकादोषकृद्व्युज्यमानानि चेद् दृष्टतां -
तद्गृहिण्याः तथा स्यादुपानत्फलं गोः तु सम्मूत्रणेऽवर्णजः (वर्णजः) संकरः ।
गमनमुखमुपानहं संप्रगृह्यौपतिष्ठेद् यदा स्याद् तदा -
सिद्धये मांसपूर्णाननेऽर्थाप्तिः आर्द्रेण चास्थ्ना शुभं
साग्न्यलातेन शुष्केण -
चास्थ्ना गृहीतेन मृत्युः प्रशान्तौल्मुकेनाभिघातोऽथ पुंसः
शिरोहस्तपादादि -
वक्त्रे भुवोऽभ्यागमो (ह्यागमो) वस्त्रचीरादिभिः व्यापदः के
चिदाहुः सवस्त्रे शुभम् ।
प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य तस्मिन् -
वधः शृंखलाशीर्णवल्लीवरत्रादि वा बन्धनं चौपगृह्यौपतिष्ठेद् यदा -
स्यात् तदा बन्धनं लेढि पादौ विधुन्वन्
स्वकर्णावुपर्याक्रमंश्चापि विघ्नाय -
यातुः विरोधे विरोधः तथा स्वांगकण्डूयने स्यात् स्वपंश्च
ऊर्ध्वपादः सदा दोषकृत् ॥ १ ॥
सूर्योदयेऽर्काभिमुखो विरौति
ग्रामस्य मध्ये यदि सारमेयः ।
एको यदा वा बहवः समेताः
शंसन्ति देशाधिपमन्यमाशु ॥ २ ॥
सूर्योन्मुखः श्वानलदिक्स्थितश्च
चौरानलत्रासकरोऽचिरेण ।
मध्याह्नकालेऽनलमृत्युशंसी
सशोणितः स्यात् कलहोऽपराह्णे ॥ ३ ॥
रुवन् दिनेशाभिमुखोऽस्तकाले
कृषीबलानां भयमाशु दत्ते (धत्ते) ।
प्रदोषकालेऽनिलदिन्मुखश्च (तु)
दत्ते (धत्ते) भयं मारुततस्करोत्थम् ॥ ४ ॥
उदन्मुखश्चापि निशार्धकाले
विप्रव्यथां गोहरणं च शास्ति ।
निशावसाने शिवदिन्मुखश्च
कन्याभिदूषानलगर्भपातान् ॥ ५ ॥
उच्चैः स्वराः स्युः तृणकूटसंस्थाः
प्रासादवेश्मोत्तमसंस्थिता वा ।
वर्षासु वृष्टिं कथयन्ति तीव्राम्
अन्यत्र मृत्युं दहनं रुजश्च ॥ ६ ॥
प्रावृट्कालेऽवग्रहेऽंभोऽवगाह्य
प्रत्यावर्तै (प्रत्यावृत्तै) रेचकैश्चाप्यभीक्षणं (अभीक्ष्णं) ।
आधुन्वन्तो वा पिबन्तश्च तोयं
वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात् ॥ ७ ॥
द्वारे शिरो न्यस्य बहिः शरीरं

रोरूयते श्वा गृहिणीं विलोक्य ।
रोगप्रदः स्यादथ मन्दिरान्तर-
बहिर्मुखो वक्ति च (शंसति) बन्धकीं ताम् ॥ ८॥
कुड्यमुत्किरति वेश्मनो यदा तत्र खानकभयं भवेत् तदा ।
गोष्ठमुत्किरति गोग्रहं वदेद् धान्यलब्धिमपि धान्यभूमिषु ॥ ९॥
एकेनाक्ष्णा साश्रुणा दीनदृष्टिः
मन्दाहारो दुःखकृत् तद्गृहस्य ।
गोभिः साकं (सार्धं) क्रीडमाणः सुभिक्षं
क्षेमारोग्यं चाभिधत्ते मुदं च ॥ १०॥
वामं जिघ्रेज्जानु वित्तागामाय स्त्रीभिः
साकं विग्रहो दक्षिणं चेत् ।
ऊरुं वामं चेन्द्रियार्थौपभोगः (उपभोगाः)
सव्यं जिघ्रेदिष्टमित्रैः विरोधः ॥ ११॥
पादौ जिघ्रेद् यायिनश्चेदयात्रां
प्राहार्थाप्तिं वांछितां निश्चलस्य ।
स्थानस्थस्यौपानहौ चेद् विजिघ्रेत्
क्षिप्रं यात्रां सारमेयः करोति ॥ १२॥
उभयोः अपि जिघ्रणे हि बाह्वोः
विज्ञेयो रिपुचौरसंप्रयोगः ।
अथ भस्मनि गोपयीत भक्षान्
मांसास्थीनि च (वा च) शीघ्रमग्निकोपः ॥ १३॥
ग्रामे भषित्वा च बहिः श्मशाने
भषन्ति चेदुत्तमपुंविनाशः ।
यियासतश्चाभिमुखो विरौति
यदा तदा श्वा निरुणद्धि यात्राम् ॥ १४॥
उकारवर्णे विरुते (वर्णेन रुते) ऽर्थसिद्धिः
ओकारवर्णेन च वामपार्श्वे ।
व्याक्षेपमौकाररुतेन विन्द्यान
निषेधकृत्सर्वरुतैश्च पश्चात् ॥ १५॥
खंखेति (सग़खेति) चौच्चैश्च मुहुर्मुहुः ये
रुवन्ति दण्डैः इव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन
ते शून्यतां मृत्युभयं च कुर्युः ॥ १६॥
प्रकाश्य दन्तान् यदि लेढि सृक्विणी
तदाशनं मृष्टं (मिष्टं) उशन्ति तद्विदः ।
यदाननं लेढि पुनः (च अवलिहेन्) न सृक्विणी
प्रवृत्तभोज्येऽपि तदान्नविघ्नकृत् ॥ १७॥
ग्रामस्य मध्ये यदि वा पुरस्य
भषन्ति संहत्य मुहुर्मुहुः ये ।
ते क्लेशमाख्यान्ति तदीश्वरस्य
श्वारण्यसंस्थो मृगवद्विचिन्त्यः ॥ १८॥
वृक्षोपगे क्रोशति तोयपातः
स्यादिन्द्रकीले सचिवस्य पीडा ।
वायोः गृहे सस्यभयं गृहान्तः
पीडा पुरस्यैव च गोपुरस्थे ॥ १९॥
भयं च शय्यासु तदीश्वराणां
याने भषन्तो भयदाश्च पश्चात् ।
अथापसव्या जनसन्निवेशे
भयं भषन्तः कथयन्त्यरीणाम् ॥ २०॥

---

अध्याय ८९ शिवारुताध्यायः
श्वभिः शेगालाः सदृशाः फलेन
विशेष एषां शिशिरे मदाप्तिः ।
हूहू रुतान्ते परतश्च टटा
पूर्णः स्वरोऽन्ये कथिताः प्रदीप्ताः ॥ १॥
लोमाशिकायाः खलु कक्कशब्दः
पूर्णः स्वभावप्रभवः स तस्याः ।
येऽन्ये स्वराः ते प्रकृतेः अपेताः
सर्वे च दीप्ता इति संप्रदिष्टाः ॥ २॥
पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता ।
धूमिताभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥ ३॥
राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥ ४॥
सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्नि अशोभना ।
पुरे सैन्येऽपसव्या च कष्टा सूर्योन्मुखी शिवा ॥ ५॥
याहीत्यग्निभयं शास्ति टाटैति मृतवेदिका ।
धिग्धिग् दुष्कृतमाचष्टे सज्वाला देशनाशिनी ॥ ६॥
नैव दारुणतामेके सज्वालायाः प्रचक्षते ।
अर्काद्यनलवत् तस्या वक्त्रं लालास्वभावतः ॥ ७॥
अन्यप्रतिरुता याम्या सोद्बन्धमृतशंसिनी ।
वारुणि अनुरुता सैव शंसते सलिले मृतम् ॥ ८॥
अक्षोभः श्रवणं चैष्टं धनप्राप्तिः प्रियागमः ।
क्षोभः प्रधानभेदश्च वाहनानां च सन्पदः ॥ ९॥
फलमासप्तमादेतदग्राह्यं परतो रुतम् ।
याम्यायां तद्विपर्यस्तं फलं षट्पंचमाद् ऋते ॥ १०॥
या रोमांचं मनुष्याणां शकृन्मूत्रं च वाजिनाम् ।
रावात् त्रासं च जनयेत् सा शिवा न शिवप्रदा ॥ ११॥
मौनं गता प्रतिरुते नरद्विरदवाजिभिः (वाजिनां) ।
या शिवा सा शिवं सैन्ये पुरे वा संप्रयच्छति ॥ १२॥
भेभा इति शिवा भयंकरी भोभो व्यापदमादिशेग सा ।
मृतिबन्धनिवेदिनी फिफे (फिफ) हूहू चात्महिता शिवा स्वरे ॥ १३॥
शान्ता त्ववर्णात् परमारुवन्ती (पवनौ रुवन्ती)
टाटामुदीर्णामिति वाश्यमाना ।
टेटे च पूर्वं परतश्च थेथे
तस्याः स्वतुष्टिप्रभवं रुतं तत् ॥ १४॥
उच्चैः घोरं वर्णमुच्चार्य पूर्वंपश्चात्
क्रोशेत् क्रोष्टुकस्यानुरूपम् ।
या सा क्षेमं प्राह वित्तस्य चाप्तिं
संयोगं वा प्रोषितेन प्रियेण ॥ १५॥

---

अध्याय ९० मृगचेष्टिताध्यायः

सीमागता वन्यमृगा रुवन्तः
स्थिता व्रजन्तोऽथ समापतन्तः ।
संप्रत्यतीतएष्यभयानि दीप्ताः
कुर्वन्ति शून्यं परितो भ्रमन्तः ॥१॥
ते ग्राम्यसत्त्वैः अनुवाश्यमाना
भयाय रोधाय भवन्ति वन्यैः ।
द्वाभ्यामपि प्रत्यनुवाशिताः ते
वन्दिग्रहायै च (ग्रहायैव) मृगा रुवन्ति (भवन्ति) ॥२॥
वन्ये सत्त्वे द्वारसंस्थे पुरस्य
रोधो वाच्यः संप्रविष्टे विनाशः ।
सूते मृत्युः स्याद् भयं संस्थिते च
गेहं याते बन्धनं संप्रदिष्टम् ॥३॥

---

अध्याय ९१ गवेंगिताध्यायः
गावो दीनाः पार्थिवस्याशिवाय
पादैः भूमिं कुट्टयन्त्यश्च रोगान् ।
मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः
पत्युः भीताः तस्करान् आरुवन्त्यः ॥१॥
अकारणे क्रोशति चेदनर्थो भयाय रात्रौ वृषभः शिवाय ।
भृशं निरुद्धा यदि मक्षिकाभिः तदाशु वृष्टिं सरमात्मजैः वा ॥२॥
आगच्छन्त्यो वेश्म बंभारवेण
संसेवन्त्यो गोष्ठवृद्धयै गवां गाः ।
आर्द्रांग्यो वा हृष्टरोम्ण्यः प्रहृष्टा
धन्या गावः स्युः महिष्योऽपि चैवम् ॥३॥

---

अध्याय ९२ अश्वेंगिताध्यायः
उत्सर्गान् न शुभदमासनात् परस्थं (आसनापरस्थं)
वामे च ज्वलनमतोऽपरं प्रशस्तम् ।
सर्वांगज्वलनमवृद्धिदं हयानां
द्वे वर्षे दहनकणाश्च धूपनं वा ॥१॥
अन्तःपुरं नाशमुपैति मेढ्रे
कोशः क्षयं यात्युदरे प्रदीप्ते ।
पायौ च पुच्छे च पराजयः स्याद्
वक्त्रौत्तमांगज्वलने जयश्च ॥२॥
स्कन्धासनांसज्वलनं जयाय
बन्धाय पादज्वलनं प्रदिष्टम् ।
ललाटवक्षो ऽक्षिभुजे च (अक्षिभुजेषु) धूमः
पराभवाय ज्वलनं जयाय ॥३॥
नासापुटप्रोथशिरोऽश्रुपात-
नेत्रे च (नेत्रेषु) रात्रौ ज्वलनं जयाय ।
पलाशताम्रासितकर्बुराणां
नित्यं शुकाभस्य सितस्य चेष्टम् ॥४॥
प्रद्वेषो यवसांभसां प्रपतनं स्वेदो निमित्ताद् विना
कंपो वा वदनाग रक्तपतनं धूमस्य वा संभवः ।
अस्वप्नश्च विरोधिनां (विरोधिता) निशि दिवा
निद्रालसध्यानता ।
सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम् ॥५॥
आरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः ।
उपवाह्यतुरंगमस्य वा कल्पस्यैव विपन्नशोभना ॥६॥
क्रौंचवद् रिपुवधाय ह्रेषितं (हेषितं)
ग्रीवया त्वचलया च सौन्मुखम् ।
स्निग्धमुच्चमनुनादि हृष्टवद-
ग्रासरुद्धवदनैश्च वाजिभिः ॥७॥
पूर्णपात्रदधिविप्रदेवता
गन्धपुष्पफलकांचनादि वा ।
द्रव्यमिष्टमथवा परं भवेद्
ध्रेषतां (धेषतां) यदि समीपतो जयः ॥८॥
भक्ष्यपानखलिनाभिनन्दिनः
पत्युः औपयिकनन्दिनोऽथवा ।
सव्यपार्श्वगतदृष्टयोऽथवा
वांछितार्थफलदाः तुरंगमाः ॥९॥
वामैश्च पादैः अभिताडयन्तो महीं
प्रवासाय भवन्ति भर्तुः ।
सन्ध्यासु दीप्तामवलोकयन्तो
ह्रेषन्ति (हेषन्ति) चेद् बन्धपराजयाय ॥१०॥
अतीव ह्रेषन्ति (हेषन्ति) ) किरन्ति वालान
निद्रारताश्च प्रवदन्ति यात्राम् ।
रोमत्यजो दीनखरस्वराश्च
पांशून् ग्रसन्तश्च भयाय दृष्टाः ॥११॥
समुद्गवद् दक्षिणपार्श्वशायिनः
पदं समुत्क्षिप्य च सक्षिणं स्थिताः ।
जयाय शेषेष्वपि वाहनेष्विदं
फलं यथासंभवमादिशेद् बुधः ॥१२॥
आरोहति क्षितिपतौ विनयौपपन्नो
यात्रानुगोऽन्यतुरगं प्रतिह्रेषते (प्रतिहेषते) च ।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
योऽश्वः स भर्तुः अचिरात् प्रचिनोति लक्ष्मीम् ॥१३॥
मुहुर्मुहुः मूत्रशकृत् करोति
न ताड्यमानोऽपि अनुलोमयायी ।
अकार्यभीतोऽश्रुविलोचनश्च
शिवं (शुभं) न भर्तुः तुरगोऽभिधत्ते ॥१४॥
उक्तमिदं हयचेष्टितमत ऊर्ध्वं दन्तिनां प्रवक्ष्यामि ।
तेषां तु दन्तकल्पनभंगम्लानादिचेष्टाभिः ॥१५॥

---

अध्याय ९३ हस्तिचेष्टिताध्यायः
दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेत्शेषम् ।
अधिकमनूपचराणां न्यूनं गिरिचारिणां किंचित् ॥१॥
श्रीवृक्ष (श्रीवत्स) वर्धमानच्छत्रध्वजचामरानुरूपेषु ।
छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥२॥
प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रनष्टदेशाप्तिः ।
लोष्टे तु लब्धपूर्वस्य भवति देशस्य संप्राप्तिः ॥३॥
स्त्रीरूपेऽश्वविनाशो भृंगारेऽभ्युत्थिते सुतौत्पत्तिः ।
कुंभेन निधिप्राप्तिः यात्राविघ्नं च दण्डेन ॥४॥

कृकलासकपिभुजंगेष्वसुभिक्षव्याधयो रिपुवशित्वं
(रिपुवशत्वं) ।
गृध्रौलूकध्वांक्षश्येनाकारेषु जनमरकः ॥ ५ ॥
पाशेऽथवा कबन्धे नृपमृत्युः जनविपत् स्रुते रक्ते ।
कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ ६ ॥
शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः ।
गलनम्लानफलानि च दन्तस्य समानि भंगेन ॥ ७ ॥
मूलमध्यदशनाग्रसंस्थिता
देवदैत्यमनुजाः क्रमात् ततः ।
स्फीतमध्यपरिपेलवं फलं
शीघ्रमध्यचिरकालसंभवम् ॥ ८ ॥
दन्तभंगफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् ।
वामतः सुतपुरोहिते भयान् (भपान्) हन्ति
साटविकदारनायकान् ॥ ९ ॥
आदिशेदुभयभंगदर्शनात् पार्थिवस्य सकलं कुलक्षयम् ।
सौम्यलग्नतिथिभादिभिः शुभं वर्धतेऽशुभमतोऽन्यथा
वदेत् (भवेत्) ॥ १० ॥
क्षीरमृष्ट (क्षीरवृक्ष) फलपुष्पपादपेष्वापगातटविघट्टितेन वा
।
वाममध्यरदभंगखण्डने (खण्डनं) शत्रुनाशकृदतोऽन्यथा परम्
॥ ११ ॥
स्खलितगतिः अकस्मात् त्रस्तकर्णोऽतिदीनः
श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
द्रुतमुक्लितदृष्टिः स्वप्नशीलो विलोमो
भयकृदहितभक्षी नैकशो ऽसृक्षकृत्कृत् (ऽसृक् छकृत् च) ॥
१२ ॥
वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिः
यायाद् यात्रानुलोमं त्वरितपदगतिः वक्त्रमुन्नाम्य चौच्चैः ।
कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा
तत्काले (तत्कालं) वा मदाप्तिः जयकृदथ रदं वेष्टयन्
दक्षिणं च ॥ १३ ॥
प्रवेशनं वारिणि वारणस्य
ग्रहणे नाशाय भवेन् नृपस्य ।
ग्राहं गृहीत्वा उत्तरणं नृपस्य (द्विपस्य)
तोयात् स्थलं वृद्धिकरं नृभर्तुः ॥ १४ ॥

---

अध्याय ९४ वायसविरुताध्यायः
प्राच्यानां दक्षिणतः शुभदाः (शुभदः) काकाः करायिका
वांवामा) ।
विपरीतमन्यदेशेष्ववधिः लोकप्रसिद्धयैव ॥ १ ॥
वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता ।
निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे ॥ २ ॥
नीडे प्राक् शाखायां शरदि भवेत् प्रथमवृष्टिः अपरस्याम् ।
याम्योत्तरयोः मध्यात् (मध्या) प्रधानवृष्टिः तरोरुपरि ॥ ३ ॥
शिखिदिशि मण्डलवृष्टिः नैरृत्यां शारदस्य निष्पत्तिः ।
परिशेषयोः सुभिक्षं मूषकसंपग (मूषकसंपत् तु) वायव्ये ॥
४ ॥
शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु ।
शून्यो भवति स देशश्चौरानावृष्टिरोगार्तः ॥ ५ ॥
द्वित्रिचतुःशावत्वं सुभिक्षदं पंचभिः नृपान्यत्वम् ।
अण्डावकिरणमेकाण्डताप्रसूतिश्च न शिवाय ॥ ६ ॥
चौरकवर्णैश्चौराश्चित्रैः मृत्युः सितैः तु वह्निभयम् ।
विकलैः दुर्भिक्षभयं काकानां निर्दिशेत्शिशुभिः ॥ ७ ॥
अनिमित्तसंहतैः ग्राममध्यगैः क्षुद्भयं प्रविरुवद्भिः (प्रवाशद्भिः
।
रोधश्चक्राकारैः अभिघातो वर्गवर्गस्थैः ॥ ८ ॥
अभयाश्च तुण्डपक्षैश्चरणविघातैः जनान् अभिभवन्तः ।
कुर्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम् ॥ ९ ॥
सव्येन खे भ्रमद्भिः स्वभयं विपरीतमण्डलैश्च परात् ।
अत्याकुलं भ्रमद्भिः वातौद्भ्रमो भवति काकैः ॥ १० ॥
ऊर्ध्वमुखाश्चलपक्षाः पथि भयदाः क्षुद्भयाय धान्यमुषः ।
सेनांगस्था युद्धं परिमोषं चान्यभृतपक्षाः ॥ ११ ॥
भस्मास्थिकेशपत्राणि विन्यसन् पतिवधाय शय्यायाम् ।
मणिकुसुमाद्यवहनने (अवहनेन) सुतस्य
जन्माप्यथांगनायाश
(जन्मांगनायाश्च) (जन्मान्यथा) च ॥ १२ ॥
पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः ।
भयदो जनसंवासाद् यदि भाण्डानि अपनयेत् काकः ॥ १३ ॥
वाहनशस्त्रौपानत्छत्रच्छायांगकुट्टने मरणम् ।
तत्पूजायां पूजा विष्ठाकरणेऽन्नसंप्राप्तिः ॥ १४ ॥
यद्द्रव्यमुपनयेत् तस्य लब्धिः अपहरति चेत् प्रणाशः स्यात्
।
पीतद्रव्यैः (पीतद्रव्ये) कनकं वस्त्रं कार्पासिकैः सितैः
(कार्पासिके सिते) रूप्यम् ॥ १५ ॥
सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च ।
प्रावृषि वृष्टिं दुर्दिनमनृतौ स्नाताश्च पांशुजलैः ॥ १६ ॥
दारुणनादः तरुकोटरोपगो वायसो महाभयदः ।
सलिलमवलोक्य विरुवन् वृष्टिकरोऽब्दानुरावी च ॥ १७ ॥
दीप्तौद्विग्नो विटपे विकुट्टयन् वह्निकृद् विधुतपक्षः ।
रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत् ॥ १८ ॥
एन्द्रयादिदिग् अवलोकी सूर्याभिमुखो रुवन् गृहे गृहिनः ।
राजभयचोरबन्धनकलहाः स्युः पशुभयं चेति ॥ १९ ॥
शान्तामेन्द्रीमवलोकयन् रुयाद् राजपुरुषमित्राप्तिः ।
भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥ २० ॥
आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च ।
याम्ये माषकुलूत्था (कुलत्था) भोज्यं गान्धर्विकैः योगः ॥
२१ ॥
नैरृत्यां दूताश्वौपकरणदधितैलपललभोज्याप्तिः ।
वारुण्यां मांससुरासवधान्यसमुद्ररत्नाप्तिः ॥ २२ ॥
मारुत्यां शस्त्रायुधसरोजवल्लीफलाशनाप्तिश्च ।
सौम्यायां परमान्नाशनं तुरंगांबरप्राप्तिः ॥ २३ ॥
ऐशान्यां संप्राप्तिः घृतपूर्णानां भवेदनडुहश्च ।
एवं फलं गृहपतेः गृहपृष्ठसमाश्रिते भवति ॥ २४ ॥

गमने कर्णसमश्चेत् क्षेमाय न कार्यसिद्धये भवति ॥ २५ ॥
अभिमुखमुपैति यातुः विरुवन् विनिवर्तयेद् यात्राम् ॥ २६ ॥
वामे वाशित्वादौ दक्षिणपार्श्वेऽनुवाशते यातुः ।
अर्थापहारकारी तद्विपरीतोऽर्थसिद्धिकरः ॥ २७ ॥
यदि वाम एव विरुवन् (विरुयात्) मुहुर्मुहुः
यायिनोऽनुलोमगतिः ।
अर्थस्य भवति सिद्ध्यै प्राच्यानां दक्षिणश्चैवम् ॥ २८ ॥
वामः प्रतिलोमगतिः विरुवन् (वाशन्) गमनस्य विघ्नकृद्
भवति ।
तत्रस्थस्यैव फलं कथयति तद्वांछितं गमने ॥ २९ ॥
दक्षिणविरुतं कृत्वा वामे विरुयाद् यथीप्सितावाप्तिः ।
प्रतिवाश्य पुरो यायाद् द्रुतमत्यर्थागमो भवति (अग्रे
ऽर्थागमोऽतिमहान्) ॥ ३० ॥
प्रतिवाश्य पृष्टःअतो दक्षिणेन यायाद् द्रुतं क्षतजकारी
(क्षतजकर्ता) ।
एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः ॥ ३१ ॥
दृष्ट्वार्कमेकपादः तुण्डेन लिखेद् यदा स्वपिच्छानि ।
पुरतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् ॥ ३२ ॥
सस्योपेते क्षेत्रे विरुवति शान्ते ससस्यभूलब्धिः ।
आकुलचेष्टो विरुवन् सीमान्ते क्लेशकृद् यातुः ॥ ३३ ॥
सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु ।
सक्षीराव्रणसंस्थितमनोज्ञवृक्षेषु चार्थसिद्धिकरः (चार्थकरः) ॥
३४ ॥
निष्पन्नसस्यशाद्व (शाड्व, शाद्व) लभवनप्रासादहर्म्यहरितेषु
।
धन्य (धान्य) उच्छ्रयमंगल्येषु चैव विरुवन् धनागमदः ॥
३५ ॥
गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजंगस्य ।
सद्यो ज्वरो महिषगे विरुवति गुल्मे फलं स्वल्पम् ॥ ३६ ॥
कार्यस्य व्याघातः तृणकूटे वामगेऽबुसंस्थे (अस्थिसंस्थे) वा
।
ऊर्ध्वाग्निप्लुष्टेऽशनिहते च काके वधो भवति ॥ ३७ ॥
कण्टकिमिश्रे सौम्ये सिद्धिः कार्यस्य भवति कलहश्च ।
कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः ॥ ३८ ॥
छिन्नाग्रे अंगच्छेदः कलहः शुष्कद्रुमस्थिते ध्वांक्षे ।
पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः ॥ ३९ ॥
मृतपुरुषांगावयवस्थितोऽभिविरुवन् (ऽभिवाशन्) करोति
मृत्युभयम् ।
भञ्जन्न् अस्थि च चंच्वा यदि विरुवति (वाशति)
अस्थिभंगाय ॥ ४० ॥
रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति ।
भुजगगदर्दंष्ट्रितस्करशस्त्राग्निभयानि अनुक्रमशः ॥ ४१ ॥
सितकुसुमाशुचिमांसाननेऽर्थसिद्धिः यथेप्सिता यातुः ।
पक्षौ धुन्वन्न् (धुन्वन् पक्षाव) ऊर्ध्वानने च विघ्नं मुहुः
क्वणति ॥ ४२ ॥
यदि शृंखलां वरत्रां वल्लीं वा आदाय वाशते बन्धः ।
पाषाणस्थे च भयं क्लिष्टापूर्वाध्विकयुतिश्च ॥ ४३ ॥
अन्योन्यभक्षसंक्रामितानने तुष्टिरुत्तमा भवति ।
विज्ञेयः स्त्रीलाभो दंपत्योः विरुवतोः (वाशतोः) युगपत् ॥
४४ ॥
प्रमदाशिरौपगतपूर्णकुंभसंस्थे अंगनार्थसंप्राप्तिः ।
घटकुट्टने सुतविपद्घटोपहदनेऽन्नसंप्राप्तिः ॥ ४५ ॥
स्कन्धावारादीनां निवेशस्मये रुवंश्चलत्पक्षः ।
सूचयतेऽन्यत्स्थानं (ऽन्यस्थानं) निश्चलपक्षः तु भयमात्रम् ॥
४६ ॥
प्रविशद्भिः सैन्यादीन् सगृध्रकंकैः विनामिषं ध्वांक्षैः ।
अविरुद्धैः तैः प्रीतिः द्विषतां युद्धं विरुद्धैश्च ॥ ४७ ॥
बन्धः सूकरसंस्थे पंकाक्ते सूकरे द्विकेऽर्थाप्तिः ।
क्षेमं खरोष्ट्रसंस्थे केचित् प्राहुः वधं तु खरे ॥ ४८ ॥
वाहनलाभोऽश्वगते विरुवत्यनुयायिनि क्षतजपातः ।
अन्येऽपि अनुव्रजन्तो यातारं काकवद् विहगाः ॥ ४९ ॥
द्वात्रिंशत् प्रविभक्ते दिग्चक्रे यद् यथा समुद्दिष्टम् ।
तत्तत् तथा विधेयं गुणदोषफलं यियासूनाम् ॥ ५० ॥
का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम् ।
कव इति चात्मप्रीत्यै कैति रुते स्निग्धमित्राप्तिशः ॥ ५१ ॥
करा इति कलहं कुरुकुरु च हर्षमथ कटकटैति दधिभक्तम् ।
केके विरुतं कुकु वा धनलाभं यायिनः प्राह ॥ ५२ ॥
खरेखरे पथिकागममाह कखाखैति यायिनो मृत्युम् ।
गमनप्रतिषेधिकमा कखला (आखलखल, आ खलखल)
सद्योऽभिवर्षाय ॥ ५३ ॥
काका इति विघातः (विघातं) काकटीति चाहारदूषणं प्राह
।
प्रीत्यास्पदं कवकवैति बन्धमेवं कगाकुः इति ॥ ५४ ॥
करगौ (करकौ) विरुते वर्षं गुडवत् त्रासाय वडिति
वस्त्राप्तिः ।
कलयैति च संयोगः शूद्रस्य ब्राह्मणैः साकम् ॥ ५५ ॥
कडिति (फडिति) फलाप्तिः फलदा (फलवा)
हिदर्शनं टड्डिति (टडिति) प्रहाराः स्युः ।
स्त्रीलाभः स्त्रीति रुते
गडिति गवां पुडिति पुष्पाणाम् ॥ ५६ ॥
युद्धाय टाकुटाक्विति गुहु वह्निभयं कटेकटे कलहः ।
टाकुलि चिण्टिचि केकेकैति पुरं चेति दोषाय ॥ ५७ ॥
काकद्वयस्यापि समानमेतत्
फलं यदुक्तं रुतचेष्टिताद्यैः ।
पतत्रिणोऽन्येऽपि यथैव काको
वन्याः श्ववगौपरिदंष्ट्रिणो ये ॥ ५८ ॥
स्थलसलिलचराणां व्यत्ययो मेघकाले
प्रचुरसलिलवृष्ट्यै शेषकाले भयाय ।
मधु भवननिलीनं तत्करोत्याशु शून्यं
मरणमपि च नीला (निलीना) मक्षिका मूर्ध्नि लीना ॥ ५९ ॥
विनिक्षिपन्त्यः सलिलेऽण्डकानि
पिपीलिका वृष्टिनिरोधमाहुः ।

तरुं स्थलं (तरुस्थलं, तरुं स्थलं) वापि नयन्ति निम्नाद्
यदा तदा ताः कथयन्ति वृष्टिम् ॥ ६०॥
कार्यं तु मूलशकुनेऽन्तरजे तदह्नि
विन्द्यात् फलं नियतमेवमिमे विचिन्त्याः ।
प्रारंभयानसमयेषु तथा प्रवेशे
ग्राह्यं क्षुतं न शुभदं क्वचिदपि उशन्ति ॥ ६१॥
शुभं दशापाकमविघ्नसिद्धिं
मूलाभिरक्षामथवा सहायान् ।
दुष्टस्य (इष्टस्य) संसिद्धिमनामयत्वं
वदन्ति ते मानयितुः नृपस्य ॥ ६२॥
क्रोशादूर्ध्वं शकुन (शकुनि) विरुतं निष्फलं प्राहुः एके
तत्रानिष्टे प्रथमशकुने मानयेत् पंच षट च ।
प्राणायामान् नृपतिः अशुभे षोडशैव द्वितीये
प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टः तृतीयः ॥ ६३॥

---

अध्याय ९५ । शाकुनौत्तराध्यायः
दिग्देशचेष्टास्वरवासरऋक्षमुहूर्तहोराकरणौदयांशान् ।
चरस्थिः (चिरस्थिर, चरस्थिः) उन्मिश्रबलाबलं च बुद्ध्वा
फलानि प्रवदेद् रुतज्ञः ॥ १॥
द्विविधं कथयन्ति संस्थितानाम्
आगामिस्थिरसंज्ञितं च कार्यम् ।
नृपदूतचरान्यदेशजातान्यस्
अभिघातः स्वजनादि चागमाख्यम् ॥ २॥
उद्बद्धसंग्रहणभोजनचौरवह्नि-
वर्षौत्सवात्मजवधाः कलहो भयं च ।
वर्गः स्थिरोऽयमुदयेन्दुयुते स्थिरऋक्षे
विद्यात् स्थिरं चरगृहे च चरं यदुक्तम् ॥ ३॥
स्थिरप्रदेशौपलमन्दिरेषु सुरालये भूजलसन्निधौ च ।
स्थिराणि कार्याणि चराणि यानि चलप्रदेशादिषु चागमाय
॥ ४ ॥
आप्यौदयऋक्षक्षणदिग्जलेषु
पक्षावसानेषु च ये प्रदीप्ताः ।
सर्वेऽपि ते वृष्टिकरा रुवन्तः
शान्तोऽपि वृष्टिं कुरुतेऽबुचारी ॥ ५ ॥
आग्नेयदिग्लग्नमुहूर्तदेशेष्व
अर्कप्रदीप्तोऽग्निभयाय रौति ।
विष्व्यां यमऋक्षोदयकण्टकेषु
निष्पत्रवल्लीषु च दोषकृत् (मोषकृत्) स्यात् ॥ ६ ॥
ग्राम्यः प्रदीप्तः स्वरचेष्टिताभ्याम्
उग्रो रुवन् कण्टकिनि स्थितश्च ।
भौमऋक्षलग्ने यदि नैरृतीं च
स्थितोऽभितश्चेत् कलहाय दृष्टः ॥ ७ ॥
लग्नेऽथवा इन्दोः भृगुभांशसंस्थे
विदिक्स्थितोऽधोवदनश्च रौति ।
दीप्तः स चेत् संग्रहणं करोति
योन्या तया या विदिशि प्रदिष्टा ॥ ८ ॥
पुंराशिलग्ने विषमे तिथौ च
दिक्स्थः प्रदीप्तः शुकुनो रनाख्यः
वाच्यं तदा संग्रहणं नराणां
मिश्रे भवेत् पण्डकसंप्रयोगः ॥ ९ ॥
एवं रवेः क्षेत्रनवांशलग्ने
लग्ने स्थिते वा स्वयमेव सूर्ये ।
दीप्तोऽभिधत्ते शकुनो विरौति (विवासं)
पुंसः प्रधानस्य हि कारणं तत् ॥ १०॥
प्रारंभमाणेषु (प्रारभ्यमाणेषु) च सर्वकार्येष्वर्कान्विताद् भाद्
गणयेद् विलग्नम् ।
संप्तद् विपगैति यथा क्रमेण संपद् विपच्चैति (वापि) तथैव
वाच्यं (वाच्या) ॥ ११॥
काणेनाक्ष्णा दक्षिणेनैति सूर्ये
चन्द्रे ल्गानाद् द्वादशे चैतरेन ।
लग्नस्थेऽर्के पापदृष्टेऽन्ध एव
कुब्जः स्वऋक्षे श्रोत्रहीनो जडो वा ॥ १२॥
क्रूरः षष्ठे क्रूरदृष्टो विलग्नाद्
यस्मिन् राशौ तद्गृहाग्गे व्रणोऽस्य (स्यात्)
एवं प्रोक्तं यन्मया जन्मकाले चिह्नं रूपं तत् तदस्मिन्
विचिन्त्यम् ॥ १३॥
(यवनेश्वर)
अतः परं लोकनिरूपितानि
द्रव्येषु नानाक्षरसंग्रहाणि ।
इष्टप्रणीतानि विभाजितानि
नामानि केन्द्रक्रमशः प्रवक्ष्ये ॥ १४॥
लग्नांबुसंस्थास्तनभःस्थितेषु
क्षेत्रेषु ये लग्नगता गृहांशाः ।
तेभ्योऽक्षराणि आत्मगृहाश्रयाणि
विन्द्याद् ग्रहाणां स्वगणक्रमेण ॥ १५ ॥
कवर्गपूर्वान् कुजशुक्रचान्द्रि-
जीवार्कजानां प्रवदन्ति वर्गान् ।
यकारपूर्वाः शशिनो निरुक्ता
वर्णाः त्वकारप्रभवा रवेः स्युः ॥ १६॥
द्रेष्काणवृद्ध्या प्रवदन्ति नाम
त्रिपंचसप्ताक्षरमोजराशौ ।
युग्मे तु विन्द्याद् द्विचतुष्कषड्कं
नामाक्षराणि ग्रहदृष्टिवृद्ध्या ॥ १७॥
वर्गोत्तमे द्व्यक्षरकं चरांशे
स्थिरऋक्षभागे चतुरक्षरं तत् ।
ओजेषु चैभ्यो विषमाक्षराणि
स्युः द्विस्वभावेषु तु राशिवग ॥ १८॥
द्विमूर्तिसंज्ञे तु वदेद् द्विनाम
सौम्यईक्षिते द्विप्रकृतौ च राशौ ।
यावान् गणः स्वोदयगोऽशकानां
तावान् ग्रहः संग्रहकेऽक्षराणाम् ॥ १९ ॥
संयोगमादौ बहुलेषु विन्द्यात्
कूटेषु संयोगपरं वदन्ति ।

स्वौच्चांशके द्विष्कृतम् ऋक्षयोगाद्
गुर्वक्षरं तद्भवनांशके स्यात् ॥ २० ॥
मात्रादियुक् स्याद् ग्रहयुक्त्रिकोणे
द्रेष्काणपर्यायवदक्षरेषु ।
नभोबलेषूर्ध्वमधोऽंबुजेषु
ज्ञेयो विसर्गः तु बलान्वितेषु ॥ २१ ॥
शीर्षोदयेषु ऊर्ध्वमुशन्ति मात्राम्
अधश्च पृष्ठोदयशब्दितेषु ।
तीर्यक् च विन्द्यादुभयोदये तां
दीर्घेषु दीर्घामितरेषु चान्याम् ॥ २२ ॥
प्राग्लग्नतोयास्तनभःस्थितेषु
भेष्वंशकेभ्योऽक्षरसंग्रहः स्यात् ।
क्रूरोऽक्षरं हन्ति चतुष्टयस्थो
दृष्ट्यापि मात्रां च त्रिकोणगो वा ॥ २३ ॥
शुभग्रहः तु ऊर्जितवीर्यभागी
स्थानांशतुल्याक्षरदः स चोक्तः ।
पश्यन् स्थितः केन्द्रत्रिकोणयोः वा
स्वौच्चेऽपि वर्णद्वयमात्मभागे ॥ २४ ॥
क्षेत्रेश्वरे क्षीणबलेऽंशके च
मात्राक्षरं नाशमुपैति तज्जम् ।
असंभवेऽपि उद्भवमेति तस्मिन
वर्गाद्यमुच्चांशयुजीशदृष्टे ॥ २५ ॥
केन्द्रे यथास्थानबलप्रकर्षे
क्षेत्रस्य तत्क्षेत्रपतेश्च बुद्धवा ।
कार्योऽक्षराणामनुपूर्वयोगो
मात्रादिसंयोगविकल्पना च ॥ २६ ॥
तत्रादिराश्यादिचतुर्विलग्नम्
आद्यंशकादिक्रमपर्यायेण ।
ग्रहांशकेभ्यः स्वगणाक्षराणाम्
अन्वर्थने प्राप्तिः इयं विधार्या ॥ २७ ॥
मेष ककारो हिबुके यकारः
तुले चकारो मकरे पकारः ।
मेषे छकारो हिबुकेऽपि अकारः
तुले खकारो मकरे फकारः ॥ २८ ॥
मेषे टकारो हिबुके ठकारः
तुले तकारो मकरे थकारः ।
मेषे तु रेफा हिबुके जकारः
तुले बकारो मकरे गकारः ॥ २९ ॥
आकारमाद्येऽंबुगते घकारम्
अस्ते भकारं मकरे झकारम् ।
लग्ने डकारं हिबुके दकारम्
अस्ते धकारं मकरे ढकारम् ॥ ३० ॥
लग्ने ञकारो हिबुके मकारः
तुले ग़कारो मकरे लकारः ।
लग्ने ककारो हिबुके पकारः
तुले चकारो मकरे इकारः ॥ ३१ ॥
लग्ने नकारो हिबुके तकारः
तुले णकारो मकरे टकारः ।
इत्येतदुक्तं चरसंज्ञकस्य वक्ष्ये
स्थिराख्यस्य चतुष्टयस्य ॥ ३२ ॥
वृषे फकारो हिबुके खकारः
कीटे वकारो नृघटे छकारः ।
आद्यांशकेभ्यो मतिमान् विदध्याद्
अनुक्रमेण स्थिरसंज्ञकेषु ॥ ३३ ॥
लग्ने बकारो हिबुके जकार
ईकारमस्तेऽंबरगे गकारः ।
वृषे थकारो हिबुके टकारः
कीटे डकारो नृघटे दकारः ॥ ३४ ॥
वृषे घकारो हिबुके शकारः
कीटे झकारो नृघटे भकारः ।
लग्ने जकारो हिबुके उकारः
कीटे ग़कारो नृघटे मकारः ॥ ३५ ॥
लग्ने ढकारोऽथ जले णकारश
चास्ते धकारोऽंबरगे नकारः ।
वृषे षकारो हिबुके चकारः
कीटे पकारो नृघटे ककारः ॥ ३६ ॥
ऊकारमाहुः वृषभे जले खम्
अस्ते फकारो नृघटे छकारः ।
अन्त्ये वृषे टम् तमुशन्ति सिंहे
थं सप्तगे ठं प्रवदन्ति कुंभे ॥ ३७ ॥
द्विमूर्तिसंज्ञे मिथुने जकाराः
षष्ठे बकारः प्रथमांशके स्यात् ।
धनुर्धरेऽस्तोपगते गकारो
मीनद्वये चांबरगे सकारः ॥ ३८ ॥
लग्ने घकारो हिबुके भकारश
चास्ते झकारोऽंबरमध्यगे ई ।
लग्ने दकारो हिबुके धकारम्
अस्ते डकारं विदुः अंबरे ढम् ॥ ३९ ॥
लग्ने मकारो हिबुके ग़कारश
अस्ते हकारोऽंबरगे ञकारः ।
लग्ने पकारो जलगे चकार
ऐकारमस्तेऽंबरगे ककारः ॥ ४० ॥
प्राग्लग्ने नं जलगे णमाहुः
अस्तं गते टं नभसि स्थिते तम् ।
प्राग्लग्नगे खं जलगे यमाहुः
अस्तं गते छं नभसि स्थिते फम् ॥ ४१ ॥
लग्ने जमोकारमथांबुसंस्थे
गमस्तसंस्थे विदुः अंबरे बम् ।
ठं लग्नगेऽन्त्ये हिबुकाश्रिते डं
थमस्तगे दं नभसि स्थिते वै ॥ ४२ ॥
एवं विकल्पोऽक्षरसंग्रहोऽयं
नाम्नां निरुद्दिष्टविधान उक्तः ।

सर्वेषु लग्नेषु च केचिदेवम्
इच्छन्ति पूर्वोक्तविधानवत् तु ॥ ४३॥
केन्द्राणि वा केन्द्रगतांशकैः स्वैः
पृथक् पृथक् संगुणितानि कृत्वा ।
त्रिकृद्विभक्तं विरुदक्षरं तत्
क्षेत्रेश्वरस्यांशपरिक्रमस्वम् ॥ ४४॥
संचिन्तितप्रार्थितनिर्गतेषु
नष्टक्षतस्त्रीः अतिभोजनेषु
स्वप्नर्क्षचिन्तापुरुषादिवर्गेष्व
एतेषु नामानि उपलक्षयेत
द्वयक्षरं चरगृहांशकोदये
नाम चास्य चतुरक्षरं स्थिरे ।
नामयुग्ममपि च द्विमूर्तिषु
त्र्यक्षरं भवति चास्य पंचभिः ॥ ४५॥
काद्याः तु वर्गाः कुजशुक्रसौम्य-
जीवार्कजानां क्रमशः प्रदिष्टाः ।
वर्णाष्टकं यादि च शीतरश्मे
रवेः अकारात् क्रमशः स्वराः स्युः ॥ ४६॥
नामानि चाग्न्यंबुकुमारविष्णु-
शक्रेन्द्रपत्नीचतुराननानाम् ।
तुल्यानि सूर्यात् क्रमशो विचिन्त्य
द्वित्र्यादिवर्णैः घटयेत् स्वबुद्धया ॥ ४७॥
वयांसि तेषाम् स्तनपानबाल्य-
व्रतस्थिता यौवनमध्यवृद्धाः ।
अतीववृद्धा इति चन्द्रभौम-
ज्ञशुक्रजीवार्कशनैश्चराणाम् ॥ ४८॥

अध्याय १६ पाकाध्यायः
पक्षाद् भानोः सोमस्य मासिको अंगारकस्य वक्त्रोक्तः ।
आदर्शनाग पाको बुधस्य जीवस्य वर्षेण ॥ १॥
षड्भिः सितस्य मासैः अब्देन शनेः सुरद्विषोऽब्दार्धात् ।
वर्षात् सूर्यग्रहणे सद्यः स्यात् त्वाष्ट्रकीलकयोः ॥ २॥
त्रिभिः एव धूमकेतोः मासैः श्वेतस्य सप्तरात्रान्ते ।
सप्ताहात् परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् ॥ ३॥
शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः ।
स्थिरचरयोः अन्यत्वं प्रसूतिविकृतिश्च षण्मासात् ॥ ४॥
अक्रियमाणककरणं भूकंपोऽनुत्सवो दुरिष्टं च ।
शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धात् ॥ ५॥
स्तंभकुसूलार्चानां जल्पितरुदितप्रकंपितस्वेदाः ।
मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च ॥ ६॥
कीटाखुमक्षिकोरगबाहुल्यं मृगविहंगविरुतं च ।
लोष्टस्य चाप्सु तरणं त्रिभिः एव विपच्यते मासैः ॥ ७॥
प्रसवः शुनामरण्ये वन्यानां ग्रामसंप्रवेशश्च ।
मधुनिलयतोरणेन्द्रध्वजाश्च वर्षात् समधिकाद् वा ॥ ८॥
गोमायुगृध्रसंघा दशाहिकाः सद्य एव तूर्यरवः ।
आक्रुष्टं पक्षफलं वल्मीको विदरणं च भुवः ॥ ९॥
अहुताशप्रज्वलनं घृततैलवसादिवर्षणं चापि ।
सद्यः परिपच्यन्ते मासेऽध्यर्धे च जनवादः ॥ १०॥
छत्रचितियूपहुतवहबीजानां सप्तभिः भवति पक्षैः ।
छत्रस्य तोरणस्य च केचिन् मासात् फलं प्राहुः ॥ ११॥
अत्यन्तविरुद्धानां स्नेहः शब्दश्च वियति भूतानाम् ।
मार्जारनकुलयोः मूषकेण संगश्च मासेन ॥ १२॥
गन्धर्वपुरं मासद् रसवैकृत्यं हिरण्यविकृतिश्च ।
ध्वजवेश्मपांशुधूमाकुला दिशश्चापि मासफलाः ॥ १३॥
नवकैकाष्टदशकैकषट्त्रिकत्रिकसंख्यमासपाकानि ।
नक्षत्राणि अश्विनिपूर्वकाणि सद्यः फलाश्लेषा ॥ १४॥
पित्र्यान् मासः षट सट्त्रयोऽर्धमष्टौ च त्रिषडेकैकाः ।
मासचतुष्केऽषाढे सद्यः पाकाभिजित्तारा ॥ १५॥
सप्ताष्टावध्यर्धं त्रयः त्रयः पंच चैव मासाः स्युः ।
श्रवणादीनां पाको नक्षत्राणां यथासंख्यम् ॥ १६॥
निगदितसमये न दृश्यते चेद्
अधिकतरं द्विगुणे प्रपच्यते तत् ।
यदि न कनकरत्नगोप्रदानैः
उपशमितं विधिवद् द्विजैश्च शान्त्या ॥ १७॥

अध्याय १७ नक्षत्रकर्मगुणाध्यायः
शिखिगुणरसेन्द्रियानलशशिविषयगुणऋतुपंचवसुपक्षाः ।
विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः ॥ १॥
भूतशतपक्षवसवो द्वात्रिंशगेति तारकामानम् ।
क्रमशोऽश्विन्यादीनां कालः ताराप्रमाणेन ॥ २॥
नक्षत्रजमुद्वाहे फलमब्दैः तारकामितैः सदसत् ।
दिवसैः ज्वरस्य नाशो व्याधेः अन्यस्य वा वाच्यः ॥ ३॥
(नक्षत्रदेवता)
अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः ।
योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च ॥ ४॥
शक्रो निरृतिः तोयं विश्वे ब्रह्मा हरिः वसुः वरुणः ।
अजपादोऽहिर्बुध्न्यः पूषा चेतीश्वरा भानाम् ॥ ५॥
त्रीणि उत्तराणि तेभ्यो रोहिण्यश्च ध्रुवाणि तैः कुर्यात् ।
अभिषेकशान्तितरुनगरधर्मबीजध्रुवारंभान् ॥ ६॥
मूलशिवशक्रभुजगाधिपानि तीक्ष्णानि तेषु सिद्धयन्ति ।
अभिघातमन्त्रवेतालबन्धवधभेदसंबन्धाः ॥ ७॥
उग्राणि पूर्वभरणीपित्र्याणि उत्सादनाशशाठ्येषु ।
योज्यानि बन्धविषदहनशस्त्रघातादिषु च सिद्धयै ॥ ८॥
लघु हस्ताश्विनपुष्याः पण्यरतिज्ञानभूषणकलासु ।
शिल्पौषधयानादिषु सिद्धिकराणि प्रदिष्टानि ॥ ९॥
मृदुवर्गो (मृदुवर्गः त्व) ऽनूराधाचित्रापौष्णेन्दवानि मित्रार्थे ।
सुरतविधिवस्त्रभूषणमंगलगीतेषु च हितानि ॥ १०॥
हौतभुजं सविशाखं मृदुतीक्ष्णम् तद्विमिश्रफलकारि ।
श्रवणत्रयमादित्यानिले च चरकर्मणि हितानि ॥ ११॥
हस्तत्रयं मृगशिरः श्रवणत्रयं (श्रवनात्त्रयं) च
पूषाश्विशक्रगुरुभानि पुनर्वसुश्च ।
क्षौरे तु कर्मणि हितानि उदये क्षणे वा
युक्तानि चौडुपतिना शुभतारया च ॥ १२॥
न स्नातमात्रगमनौन्मुख (उत्सुक) भूषितानाम्

अभ्यक्तभुक्तरणकालनिरासनानाम् ।
सन्ध्यिनशाशनिकुजार्कतिथौ (निशोः कुजयमार्कदिने) च रिक्ते
क्षौरं हितं न नवमेऽह्नि न चापि विष्ट्याम् ॥१३॥
नृपाज्ञया ब्राह्मणसम्मते च विवाहकाले मृतसूतके च ।
बद्धस्य मोक्षे ऋतुदीक्षणासु सर्वेषु शस्तं क्षुरकर्म भेषु ॥१४॥
हस्तो मूलं श्रवणा पुनर्वसुः मृगशिरः तथा पुष्यः ।
पुंसञ्ज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥१५॥
सावित्रपौष्णानिलमैत्रतिष्यत्वाष्ट्रे तथा चौडुगणाधिपऋक्षे ।
संस्कारदीक्षाव्रतमेखलादि कुर्याद् गुरौ शुक्रबुधेन्दुयुक्ते ॥ १६॥
लाभे तृतीये च शुभैः समेते पापैः विहीने शुभराशिलग्ने ।
वेध्यौ तु कर्णौ त्रिदशेज्यलग्ने तिष्येन्दुचित्राहरिरेवतीषु ॥ १७॥
शुद्धैः द्वादशकेन्द्रनैधनगृहैः पापैः त्रिषष्ठायगैः ।
लग्ने केन्द्रगतेऽथवा सुरगुरौ दैत्येन्द्रपूज्येऽपि वा ॥१८॥
सर्वारंभफलप्रसिद्धिरुदये राशौ च कर्तुः शुभे
सग्राम्यस्थिरभोदये च भवनं कार्यं प्रवेशोऽपि वा ॥१९॥

---

अध्याय ९८ तिथिकर्मगुणाध्यायः
कमलजविधातृहरियमशशांकषड्वक्त्रशक्रवसुभुजगाः ।
धर्मेशसवितृमन्मथकलयो विश्वे च तिथिपतयः ॥१॥
पितरोऽमावस्यायां संज्ञासदृशाश्च तैः क्रियाः कार्याः ।
नन्दा भद्रा विजया रिक्ता पूर्णा च ताः त्रिविधाः ॥२॥
यत् कार्यं नक्षत्रे तद्दैवत्यासु तिथिषु तत् कार्यम् ।
करणमुहूर्तेष्वपि तत् सिद्धिकरं देवतासदृशम् ॥३॥

---

अध्याय ९९ करणगुणाध्यायः
ववबालवकौलव (बवबालवकौलब)
तैतिलाख्यगरवणिजविष्टिसंज्ञानाम् ।
पतयः स्युः इन्द्रकमलजमित्रार्यमभूश्रियः सयमाः ॥१॥
कृष्णचतुर्दश्यर्धाद् ध्रुवाणि शकुनिश्चतुष्पदं नागम् ।
किंस्तुघ्नमिति च तेषां कलिवृषफणिमारुताः पतयः ॥२॥
कुर्याद् ववे (बवे) शुभचरस्थिरपौष्टिकानि
धर्मक्रियाद्विजहितानि च वालव (बालव) आख्ये ।
संप्रीतिमित्रवरणानि च कौलवे (कौलबे) स्युः
सौभाग्यसंश्रयगृहाणि च तैतिलाख्ये ॥३॥
कृषिबीजगृहाश्रयजानि गरे
वणिजि ध्रुवकार्यवणिग्युतयः ।
न हि विष्टिकृतं विदधाति शुभं
परघातविषादिषु सिद्धिकरम् ॥४॥
कार्यं पौष्टिकमौषधादि शकुनौ मूलानि मन्त्राः तथा ।
गोकार्याणि चतुष्पदे द्विजपितृन् उद्दिश्य राज्यानि च
नागे स्थावरदारुणानि हरणं दौर्भाग्यकर्माण्यतः
किंस्तुघ्ने शुभमिष्टि (इष्ट) पुष्टिकरणं मंगल्यसिद्धिक्रियाः ॥ ५॥
लाभे तृइतीये च शुभैः समेते पापैः विहीने शुभराशिलग्ने ।
वेध्यौ च कर्णावमरेज्यलग्ने पुष्येन्दुचित्राहरिपौष्णभेषु ॥६॥
रोहिण्युत्तररेवतीमृगशिरोमूलानुराधामघा-
हस्तस्वातिषु षष्ठतौलिमिथुनेषूद्यत्सु पाणिग्रहः ।
सप्ताष्टान्त्यबहिःशुभैरुडुपतावेकादशद्वित्रिगे
क्रूरैः त्र्यायषडष्टगैः न तु भृगौ षष्ठे कुजे चाष्टमे ॥७॥
दंपत्योः द्विनवाष्टराशिरहिते चारानुकुले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः ।
त्यक्त्वा च व्यतिपातवैधृति (वैधृत) दिनं विष्टिं च रिक्तां तिथिं
क्रूराहायनपौषचैत्र (चैत्रपौष) विरहे लग्नांशके मानुषे ॥८॥

---

अध्याय १०० नक्षत्रजातकाध्यायः
प्रियभूषणः स्वरूपः (सुरूपः) सुभगो दक्षोऽश्विनीषु मतिमांश्च ।
कृतनिश्चयसत्यारुग्दक्षः सुखितश्च भरणीषु ॥१॥
बहुभुक् परदाररतः तेजस्वी कृत्तिकासु विख्यातः ।
रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरः स्वरूपश्च (स्थिरसुरूपश्च) ॥२॥
चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी ।
शठगर्वितचण्डकृतघनहिंस्रपापश्च रौद्रर्क्षे ॥३॥
दान्तः सुखी सुशीलो दुर्मेधा रोगभाक् पिपासुश्च ।
अल्पेन च सन्तुष्टः पुनर्वसौ जायते मनुजः ॥४॥
शान्तात्मा सुभगः पण्डितो धनी धर्मसंश्रितः पुष्ये ।
शठसर्वभक्षक्ष्य (भक्ष) (भक्ष्य) पापः कृतघ्नधूर्तश्च भौजंगे ॥ ५॥
बहुभृत्यधनी भोगी सुरपितृभक्तो महोद्यमः पित्र्ये ।
प्रियवाग् दाता द्युतिमान् अटनो नृपसेवको भाग्ये ॥६॥
सुभगो विद्याप्तधनो भोगी सुखभाग् द्वितीयफल्गुन्याम् ।
उत्साही धृष्टः पानपोऽघृणी तस्करो हस्ते ॥७॥
चित्रांबरमाल्यधरः सुलोचनांगश्च चित्रायां (भवति चित्रायां) ।
दन्तो वणिक् तृषालुः (कृपालुः) प्रियवाग् धर्माश्रितः स्वातौ ॥८॥
ईर्षुः (इर्ष्युः) लुब्धो द्युतिमान् वचनपटुः कलहकृद् विशाखासु ॥९॥
आढ्यो विदेशवासी क्षुधालुः अटनोऽनुराधासु ॥१०॥
ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मकृत् प्रचुरकोपः ।
मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी ॥११॥
इष्टानन्दकलत्रो वीरो दृढसौहृदश्च जलदेवे ।
वैश्वे विनीतधार्मिकबहुमित्रकृतज्ञसुभगश्च ॥१२॥
श्रीमान् श्रवणे श्रुतवान् उदारदारो धनान्वितः ख्यातः ।
दाताआढ्यशूरगीतिप्रियो धनिष्ठासु धनलुब्धः ॥१३॥
स्फुटवाग् व्यसनी रिपुहा साहसिकः शतभिषक्सु दुरग्रआह्यः ।
भद्रपदासूद्विग्नः स्त्रीजितधनपटुः अदाता च ॥१४॥
वक्ता सुखी प्रजावान् जितशत्रुः धार्मिको द्वितीयासु ॥१५॥
संपूर्णांगः सुभगः शूरः शुचिः अर्थवान् पौष्णे ॥१६॥

अध्याय १०१ राशिविभागाध्यायः
अश्विन्योऽथ भरण्यो बहुलापादश्च कीर्त्यते मेषः ।
वृषभो बहुलाशेषं रोहिण्योऽर्धम् च मृगशिरसः ॥ १॥
मृगशिरो ऽर्धं रौद्रं पुनर्वसोः (पुनर्वसोः च) अंशकत्रयं मिथुनः (मिथुनं) ।
पादश्च पुनर्वसुतः तिष्यः श्लेषा (पुनर्वसोः सतिष्योऽश्लेषा) च कर्कटकः ॥ २॥
सिंहोऽथ मघा पूर्वा च फल्गुनी पाद उत्तरायाश्च ।
तत्परिशेषं हस्तश्चित्राद्यर्धं च कन्याख्यः ॥ ३॥
तौलिनि चित्रान्त्यार्धं स्वातिः पादत्रयं विशाखायाः ।
अलिनि विशाखापादः तथानुराधान्विता ज्येष्ठा ॥ ४॥
मूलमषाढा पूर्वा प्रथमश्चाप्युत्तरांशको धन्वी ।
मकरः तत्परिषेशं श्रवणः पूर्वं धनिष्ठार्धम् ॥ ५॥
कुंभोऽन्त्यधनिष्ठार्धं शतभिषगंशत्रयं च पूर्वायाः ।
भद्रपदायाः शेषं तथोत्तरा रेवती च झषः ॥ ६॥
अश्विनीपित्र्यमूलाद्या मेषसिंहहयादयः ।
विषमर्क्षक्षान् निवर्तन्ते पादवृद्ध्या यथोत्तरम् ॥ ७॥

---

अध्याय १०२ विवाहपटलाध्यायः
मूर्तौ करोति दिनकृद् विधवां कुजश्च
राहुः विपन्नतनयां रविजो दरिद्राम् ।
शुक्रः शशांकतनयश्च गुरुश्च साध्वीम्
आयुःक्षयं प्रकुरुतेऽथ विभावरीशः ॥ १॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये ।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशांकः ॥ २॥
सूर्येन्दुभौमगुरुशुक्रबुधाः तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च ।
व्यक्तां (व्यक्तं) दिवाकरसुतः सुभगां करोति
मृत्युं ददाति नियमात् खलु सैंहिकेयः ॥ ३॥
स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्ननं (सपत्न्यं) अपि च क्षितिजोऽल्पवित्तं (अल्पवित्तां)
दद्याद् भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥ ४॥
नष्टात्मजां रविकुजौ खलु पंचमस्थे (पंचमस्थौ)
चन्द्रात्मजो बहुसुता गुरुभार्गवौ च ।
राहुः ददाति मरणं शनिरुग्ररोगं
कन्याविनाशं (प्रसूतिं) अचिरात् कुरुते शशांकः ॥ ५॥
षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्राम्
ऋद्धां शशांकतनयः कलहप्रियां च ॥ ६॥
सौरारजीवबुधराहुरवीन्दुशुक्राः
कुर्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनवधक्षयमर्थनाश-
व्याधिप्रवासमरणानि यथाक्रमेण ॥ ७॥
स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सरुजां (सरुजं) महीजः
सूर्यात्मजो धनवतीं पितवल्लभां च ॥ ८॥
धर्मे स्थिता भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजः त्वरोगाम् ।
राहुश्च सूर्यतनयश्च करोति बन्ध्यां (वन्ध्यां)
कन्याप्रसूतिमटनां (अटनं) कुरुते शशांकः ॥ ९॥
राहुः नभःस्थलगतो (नभस्थलगतो) विधवां करोति
पापे रतां दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः ॥ १०॥
आये रविः बहुसुतां सधनां (धनिनीं) शशांकः
पुत्रान्वितां क्षितिसुतो रविजो धनाढ्याम् ।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुः अर्थयुक्ताम् ॥ ११॥
अन्ते गुरुः धनवतीं दिनकृद् दरिद्रां
चन्द्रोधनव्ययकरीं कुलटां च राहुः ।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रां
पानप्रसक्तहृदयाम् रविजः कुजश्च ॥ १२॥
गोपैः यष्ट्याहतानां खुरपुटदलिता या तु धूलिः दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनसुतारोग्यसौभाग्यकर्त्री ।
तस्मिन् काले न चऋक्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थं शमयति दुरितानि उत्थितं गोरजः तु ॥ १३॥

---

अध्याय १०३ ग्रहगोचराध्यायः
प्रायेण सूत्रेण विनाकृतानि प्रकाशरन्ध्राणि चिरन्तनानि ।
रत्नानि शास्त्राणि च योजितानि नवैः गुणैः भूषयितुं क्षमाणि ॥ १॥
प्रायेण गोचरो व्यवहार्योऽतः तत्फलानि वक्ष्यामि ।
नानावृत्तैः आर्या (तन्नो) मुखचपलत्वं क्षमध्वं नःक्षमन्त्वार्याः) ॥ २॥
माण्डव्यगिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम् ।
साध्वी तथा न पुंसां प्रिया यथा स्याज्जघनचपला ॥ ३॥
सूर्यः षट्त्रिदशस्थितः त्रिदशषट्सप्ताद्यगश्चन्द्रमा
जीवः सप्तनवद्विपंचमगतो वक्रार्कजौ षट्त्रिगौ ।
सौम्यः षड्द्विचतुर्दशाष्टमगतः सूर्ये (सर्वे) ऽपि उपान्ते शुभाः
शुक्रः सप्तमषड्दशऋक्षसहितः शार्दूलवत् त्रासकृत् ॥ ४॥
जन्मनि आयासदोऽर्कः क्षपयति विभवान् कोष्ठरोगाध्वदाता
वित्तभ्रंशं द्वितीये दिशति च न सुखं वंचनां दृग्रुजं च ।
स्थानप्राप्तिं तृतीये धननिचयमुदा कल्यकृच्चारिहर्ता (हन्ता)

रोगान् दत्ते (धत्ते) चतुर्थे जनयति च मुहुः
स्रग्धराभोगविघ्नम् ॥ ५ ॥
पीडाः स्युः पंचमस्थे सवितरि बहुशो रोगारिजनिताः
षष्ठेऽर्को हन्ति रोगान् क्षपयति च रिपून् शोकांश्च नुदति ।
अध्वानं सप्तमस्थो जठरगदभयं दैन्यं च कुरुते ।
रुक्त्रासौ (रुक्कासौ) चाष्टमस्थे भवति सुवदना न स्वापि वनिता ॥ ६ ॥
रवावापद्दैन्यं रुग् इति नवमे वित्त (चित्त) चेष्टाविरोधो
जयं प्राप्नोत्युग्रं दशमगृहगे कर्मसिद्धिं क्रमेण ।
जयस्थानं (जयं स्थानं) मानं विभवमपि चैकादशे रोगनाशं
सुवृत्तानां चेष्टा भवति सफला द्वादशे नैतरेषाम् ॥ ७ ॥
शशी जन्मनि अन्नप्रवरशयनाच्छादनकरो
द्वितीये मानार्थान् (मानार्थौ) ग्लपयति सविघ्नश्च भवति ।
तृतीये वस्त्रस्त्रीधनविजय (निचय) सौख्यानि लभते
चतुर्थेऽविश्वासः शिखरिणि भुजंगेन सदृशः ॥ ८ ॥
दैन्यं व्याधिं शुचमपि शशी पंचमे मार्गविघ्नं
षष्ठे वित्तं जनयति सुखं शत्रुरोगक्षयं च ।
यानं मानं शयनमशनं सप्तमे वित्तलाभं
मन्द आक्रान्ते फणिनि हिमगौ च अष्टमे भीः न कस्य ॥ ९ ॥
नवमगृहगो बन्धौद्वेगश्रमौदररोगकृद्
दशमभवने च आज्ञाकर्मप्रसिद्धिकरः शशी ।
उपचयसुहृत्संयोगार्थप्रमोदमुपान्त्यगो
वृषभचरितान् दोषान् अन्त्ये (अन्ते) करोति च (हि) सव्ययान् ॥ १० ॥
कुजेऽभिघातः प्रथमे द्वितीये नरेन्द्रपीडा कलहारिदोषैः ।
भृशं च पित्तानलचौररोगैः (रोगचौरैः)
उपेन्द्रवज्रप्रतिमोऽपि यः स्यात् ॥ ११ ॥
तृतीयगश्चौरकुमारकेभ्यो
भौमः सकाशात् फलमादधाति ।
प्रदीप्तिमाज्ञां धनमौर्णिकानि
धात्वाकर आख्यानि किल अपराणि ॥ १२ ॥
भवति धरणिजे चतुर्थगे ज्वरजठरगदासृगुद्भवः ।
कुपुरुषजनिताग संगमात् प्रसभमपि करोति च अशुभम् ॥ १३ ॥
रिपुगदकोपभयानि पंचमे
तनयकृताश्च शुचो महीसुते ।
द्युतिः अपि न अस्य चिरं भवेत् स्थिरा
शिरसि कपेः इव मालती यथा (कृता) ॥ १४ ॥
रिपुभयकलहैः विवर्जितः सकनकविद्रुमताम्रकामगः (कागमः) ।
रिपुभवनगते महीसुते किमपरवक्त्रविकारमीक्षते ॥ १५ ॥
कलत्रकलहाक्षिरुग्जठररोगकृत् सप्तमे
क्षरत्क्षतजरूक्षितः क्षपित (क्षयित) वित्तमानोऽष्टमे ।
कुजे नवमसंस्थिते परिभवार्थनाश आदिभिः
विलंबितगतिः भवत्यबलदेहधातुक्लमैः ॥ १६ ॥
दशमगृहगते समं महीजे
विविधधन आप्तिरुपान्त्यगे जयश्च ।
जनपदमुपरि स्थितश्च भुंक्ते
वनमिव षट्चरणः सुपुष्पिताग्रम् ॥ १७ ॥
नानाव्ययैः द्वादशगे महीसुते
सन्ताप्यतेऽनर्थशतैश्च मानवः ।
स्त्रीकोपपित्तैश्च सनेत्रवेदनैः
योऽपि इन्द्रवंशाभिजनेन गर्वितः ॥ १८ ॥
दुष्टवाक्यपिशुनाहितभेदैः बन्धनैः सकलहैश्च हृतस्वः ।
जन्मगे शशिसुते पथि गच्छन् स्वागतेऽपि कुशलं न शृणोति ॥ १९ ॥
परिभवो धनगते धनलब्धिः सहजगे शशिसुते हृदय आप्तिः (सुहृदाप्तिः) ।
नृपतिशत्रुभयशंकितचितो (चित्तो) द्रुतपदं व्रजति दुश्चरितैः स्वैः ॥ २० ॥
चतुर्थगे स्वजनकुटुंबवृद्धयो
धनागमो भवति च शीतरश्मिजे ।
सुतस्थिते तनयकलत्रविग्रहो
निषेवते न च रुचिरामपि स्त्रियम् ॥ २१ ॥
सौभाग्यं विजयमथ उन्नतिं च षष्ठे
वैवर्ण्यं कलहमतीव सप्तमे ज्ञः ।
मृत्युस्थे जयसुत (सुतजय) वस्त्रवित्तलाभा
नैपुण्यं भवति मतिप्रहर्षणीयम् ॥ २२ ॥
विघ्नकरो नवमः शशिपुत्रः कर्मगतो रिपुहा धनदश्च ।
सप्रमदं शयनं च विधत्ते तन्नृहदो ऽथ कथां स्तरणं च (कथास्तरणं) ॥ २३ ॥
धनसुतसुख (सुखसुत) योषिन्मित्रवाह (वाह्य) आप्तितुष्टिः
तुहिनकिरणपुत्रे लाभगे मृष्टवाक्यः ।
रिपुपरिभवरोगैः पीडितो द्वादशस्थे
न सहति परिभोक्तुं मालिनीयोगसौख्यम् ॥ २४ ॥
जीवे जन्मनि अपगतधनधीः
स्थानभ्रष्टो बहुकलहयुतः ।
प्राप्य अर्थेऽर्थान् व्यरिः अपि कुरुते
कान्ताआस्याब्जे भ्रमरविलसितम् ॥ २५ ॥
स्थानभ्रंशात् कार्यविघाताग तृतीये
अनेकैः (नैकैः) क्लेशैः बन्धुजनोत्थैश्च चतुर्थे ।
जीवे शान्तिं पीडितचित्तश्च स विन्देद् (विन्देन्)
नैव ग्रामे नापि वने मत्तमयूरे ॥ २६ ॥
जनयति च तनयभवनमुपगतः
परिजनशुभसुतकरितुरगवृषान् ।
सकनकपुरगृहयुवतिवसनकृन
मणिगुणनिकरकृदपि विबुधगुरुः ॥ २७ ॥
न सखीवदनं तिलकोज्ज्वलं
न च वनं (भवनं) शिखिकोकिलनादितम् ।
हरिणप्लुतशावविचित्रितं
रिपुगते मनसः सुखदं गुरौ ॥ २८ ॥
त्रिदशगुरुः शयनं रतिभोगं

धनमशनं कुसुमानि उपवाह्यम् ।
जनयति सप्तमराशिमुपेतो
ललितपदां च गिरं धिषणां च ॥ २९ ॥
बन्धं व्याधिम् चाष्टमे शोकमुग्रं
मार्गक्लेशं) क्लेशान् मृत्युतुल्यांश्च रोगान् ।
नैपुण्याआज्ञापुत्रकर्मार्थसिद्धिं
धर्मे जीवः शालिनीनां च लाभम् ॥ ३० ॥
स्थानकल्यधनहा दशऋक्षगः
तत्प्रदो भवति लाभगो गुरुः ।
द्वादशेऽध्वनि विलोमदुःखभाग्
याति यद्यपि नरो रथोद्धतः ॥ ३१ ॥
प्रथमगृहौपगो भृगुसुतः स्मरौपकरणैः
सुरभिमनोज्ञगन्धकुसुमांबरैरुपचयम् ।
शयनगृहासनाशनयुतस्य च अनुकुरुते
समदविलासिनीमुखसरोजषट्चरणताम् ॥ ३२ ॥
शुक्रे द्वितीयगृहगे प्रसवार्थधान्य-
भूपालसन्नत (सन्नति) कुटुंबहितानि अवाप्य ।
संसेवते कुसुमरत्नविभूषितश्च
कामं वसन्ततिलकद्युतिमूर्धजोऽपि ॥ ३३ ॥
आज्ञा अर्थमानास्पदभूतिवस्त्रशत्रुक्षयान् दैत्यगुरुः तृतीये ।
दत्ते (धत्ते) चतुर्थश्च सुहृत्समाजं रुद्रेन्द्रवज्रप्रतिमां च
शक्तिम् ॥ ३४ ॥
जनयति शुक्रः पंचमसंस्थो गुरुपरितोषं बन्धुजनाप्तिम् ।
सुतधनलब्धिं मित्रसहायान् अनवसितत्वं च अरिबलेषु ॥
३५ ॥
षष्ठो भृगुः परिभवरोगतापदः
स्त्रीहेतुकं जनयति सप्तमोऽशुभम् ।
यातोऽष्टमं भवनपरिच्छदप्रदो
लक्ष्मीवतीमुपनयति स्त्रियं च सः ॥ ३६ ॥
नवमे तु धर्मवनितासुखभाग्
भृगुजेऽर्थवस्त्रनिचयश्च भवेत् ।
दशमेऽवमानकलहान् नियमात्
प्रमिताक्षराणि अपि वदन् लभते ॥ ३७ ॥
उपान्त्यगो भृगो सुतः सुहृद्धनान्नगन्धदः ।
धनांबर आगमोऽन्त्यगः स्थिरः तु नांबर आगमः ॥ ३८ ॥
प्रथमे रविजे विषवह्निहतः स्वजनैः वियुतः कृतबन्धुवधः ।
परदेशमुपैत्यसुहृद्भवनो विमुखार्थसुतोऽटकदीनमुखः ॥ ३९ ॥
चारवशाद् द्वितीयगृहगे दिनकरतनये
रूपसुखापवर्जिततनुः विगतमदबलः ।
अन्यगुणैः कृतं वसुचयम् तदपि खलु भवत्यस्
अंब्विव वंशपत्रपतितं न बहु न च चिरम् ॥ ४० ॥
सूर्यसुते तृतीयगृहगे धनानि लभते
दासपरिच्छदौष्ट्रमहिषा अश्वकुञ्जरखरान् ।
सद्मविभूतिसौख्यममितं गदव्युपरमं
भीरुः अपि प्रशास्त्यधिरिपूंश्च वीरललितैः ॥ ४१ ॥
चतुर्थं गृहं सूर्यपुत्रेऽभ्युपेते
सुहृद्वित्तभार्य आदिभिः विप्रयुक्तः ।
भवत्यस्य सर्वत्र चासाधु दुष्टं
भुजंगप्रयातानुकारं च चित्तम् ॥ ४२ ॥
सुतधनपरिहीणः पंचमस्थे
प्रचुरकलहयुक्तश्च अर्कपुत्रे ।
विनिहतरिपुरोगः षष्ठयाते
पिबति च वनिताआस्यं श्रीपुटोष्ठम् ॥ ४३ ॥
गच्छत्यध्वानं सप्तमे च अष्टमे च
हीनः स्त्रीपुत्रैः सूर्यजे दीनचेष्टः ।
तद्वद् धर्मस्थे वैरहृद्रोगबन्धैः
धर्मोऽपि उच्छिद्येद् वैश्वदेवीक्रियाद्यः ॥ ४४ ॥
कर्मप्राप्तिः दशमेऽर्थक्षयश्च
विद्याकीर्त्योः परिहानिश्च सौरे ।
तैक्ष्ण्यं लाभे परयोषार्थलाभः (लाभा)
च अन्त्ये (अन्ते) प्राप्नोत्यपि शोक ऊर्मिमालाम् ॥ ४५ ॥
अपि कालमपेक्ष्य च पात्रं शुभकृद् विदधात्यनुरूपम् ।
न मधौ बहु कं कुडवे वा (च) विसृजत्यपि मेघवितानः ॥
४६ ॥
रक्तैः पुष्पैः गन्धैः ताम्रैः कनकवृषबकुलकुसुमैः
दिवाकरभूसुतौ
भक्त्या पूज्याविन्दुः धेन्वा सितकुसुमरजतमधुरैः सितश्च
मदप्रदैः ।
कृष्णद्रव्यैः सौरिः सौम्यो मणिरजततिलककुसुमैः गुरुः
परिपीतकैः
प्रीतैः पीडा न स्यादुच्चाद् यदि पतति विशति यदि वा
भुजंगविजृंभितम् ॥ ४७ ॥
शमयौद्गतामशुभदृष्टिमपि विबुधविप्रपूजया ।
शान्तिजपनियमदानदमैः सुजनाभिभाषणसमागमैः तथा ॥
४८ ॥
रविभौमौ पूर्वार्धे शशिसौरौ कथयतोऽन्त्यगौ राशेः ।
सदसल्लक्षणमार्यगीत्युपगीत्योः यथासंख्यम् ॥ ४९ ॥
आदौ यादृक् सौम्यः पश्चादपि तादृशो भवति ।
उपगीतेः मात्राणां गणवत् सत्संप्रयोगो वा ॥ ५० ॥
आर्याणामपि कुरुते विनाशमन्तर्गुरुः विषमसंस्थः ।
गण इव षष्ठे दृष्टः स (च) सर्वलघुतां जनं (गतो) नयति ॥
५१ ॥
अशुभनिरीक्षितः शुभफलो बलिना बलवान
अशुभफलप्रदश्च शुभदृग्विषयोपगतः ।
अशुभशुभावपि स्वफलयोः व्रजतः समताम्
इदमपि गीतकं च खलु नर्कुटकं च यथा ॥ ५२ ॥
नीचेऽरिभेऽस्ते च अरिदृष्टस्य (अरि) सर्वं वृथा यत् (यथा)
परिकीर्तितम् ।
पुरतोऽन्धस्य इव कामिन्याः सविलासकटाक्षनिरीक्षणम् ॥
५३ ॥
सूर्यसुतोऽर्कफलसमश्चन्द्रसुतश
छन्दतः समनुयाति यथा ।

स्कन्धकमार्यगीतिः वैतालीयं च
मागधी गाथाआर्याम् ॥ ५४॥
सौरोऽर्करश्मियोगात् (रागात्) सविकारो लब्धवृद्धिः अधिकतरम् ।
पित्तवदाचरति नृणां पथ्यकृतां न तु तथाआर्याणाम् ॥ ५५॥
यादृशेन ग्रहेणेन्दुः युक्तः तादृग् भवेत् सोऽपि ।
मनोवृत्तिसमायोगाद् विकार इव वक्त्रस्य ॥ ५६॥
पंचमं लघु सर्वेषु (सर्वपादेषु) सप्तमं द्विचतुर्थयोः ।
यद्वत्श्लोकाक्षरं तद्वल्लघुतां याति दुःस्थितैः ॥ ५७॥
प्रकृत्य अपि लघुः यश्च वृत्तबाह्ये व्यवस्थितः ।
स याति गुरुतां लोके यदा स्युः सुस्थिता ग्रहाः ॥ ५८॥
प्रारब्धमसुस्थितैः ग्रहैः यत् कर्म आत्मविवृद्धये बुधैः (ऽबुधैः) ।
विनिहन्ति तदेव कर्म तान् वैतालीयमिव अयथाकृतम् ॥ ५९॥
सौस्थित्यमवेक्ष्य यो ग्रहेभ्यः काले प्रक्रमणं करोति राजा ।
अणुना अपि स पौरुषेण वृत्यौ (वृत्तस्यौ) पच्छन्दसिकस्य याति पारम् ॥ ६०॥
उपचयभवनौपयातस्य भानोः दिने कारयेद् -
धेमताम्राश्वकाष्ठास्थिचर्माउर्णिकाद्रिद्रुमत्वग्नखव्यालचौर -
आयुधीयाटवीक्रूरराजोपसेवाभिषेकाउषधक्षौमपण्यादि-
गोपालकान्तारवैद्याश्मकूटावदाताभिविख्यातशूर
आहवश्लाघ्ययाय्य -
(याज्या) अग्निकर्माणि (कार्याणि) सिद्ध्यन्ति लग्नस्थिते वा रवौ ।
शिशिरकिरणवासरे तस्य व अपि उद्गमे केन्द्रसंस्थेऽथवा -
भूषणं शंखमुक्ता अब्जरूप्यांबुयज्ञेक्षुभोज्यांगनाक्षीर-
सुस्निग्धवृक्षक्षुपानूपधान्यद्रवद्रव्यविप्राध्वगीत -
(विप्राश्वशीत) क्रियाशृंगिकृष्यादिसेनाधिप -
आक्रन्दभूपालसौभाग्यनक्तंचरश्लैष्मिकद्रव्यमातुल्य
(मातुंग) -
पुष्पांबरारंभसिद्धिः भवेत् ॥ ६१॥
क्षितितनयदिने प्रसिद्ध्यन्ति (प्रसिध्यन्ति) धात्वाकरादीनि -
सर्वाणि कार्याणि चामीकराग्निप्रवाल
आयुधक्रौर्यचौर्याभिघाताट-
वीदुर्गसेनाधिकाराः -
तथा रक्तपुष्पद्रुमा रक्तमन्यग तिक्तं
कटुद्रव्यकूटाहिपाशार्जितस्वाः -
कुमारा भिषक्षाक्यभिक्षुक्षपावृत्तिकोशेश (कौशेय) शाठ्यानि -
सिद्ध्यन्ति (सिध्यन्ति) दंभाः तथा ॥ ६२॥
हरति (हरित, हरित) मणिमहीसुगन्धीनि वस्त्राणि साधारणं -
नाटकं शास्त्रविज्ञानकाव्यानि सर्वाः कलायुक्तयो -
मन्त्रधातुक्रियावादनैपुण्यपुण्यव्रतायोगदूताः
तथाऽऽयुष्यमायानृतस्नानह्रस्वाणि -
दीर्घाणि मध्यानि च छन्दतः (च्छन्दनः)
चण्डवृष्टिप्रयातानुकारीणि -
कार्याणि सिद्ध्यन्ति (सिध्यन्ति) सौम्यस्य लग्नेऽह्नि वा ॥ ६३॥
सुरगुरुदिवसे कनकं रजतं तुरगाः करिणो वृषभा -
भिषगौषधयः (ओषधयः) ।
द्विजपितृसुरकार्यपुरःस्थितघर्म (धर्म)
निवारणचामरभूषणभूपतयः ।
विबुधभवनधर्मसमाश्रयमंगलशास्त्रमनोज्ञबलप्रदसत्यगिरः ।
व्रतहवनधनानि च सिद्धिकराणि तथा रुचिराणि च
वर्णकदण्डकवत् ॥ ६४॥
भृगुसुतदिवसे च
चित्रवस्त्रवृष्यवेश्यकामिनीविलासहासयौवनौपभोगरम्यभूमयः ।
स्फटिकरजतमन्मथौपचारवाहनैक्षुशारद-
प्रकारगोवणिक्कृषीवलौषधांबुजानि च ।
सवितृसुतदिने च कारयेन् -
महिष्यजौष्ट्रकृष्णलोहदासवृद्धनीचकर्मपक्षिचौरपाशिकान् ।
च्युतविनयविशीर्णभाण्डहस्त्यपेक्षविघ्नकारणानि च -
अन्यथा न साधयेत् समुद्रगोऽपि अपां कणम् ॥ ६५॥
विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्यमेतावत् ।
श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥ ६६॥

---

अध्याय १०४ रूपसत्राध्यायः
पादौ मूलं जंघे च रोहिणी जानुनी तथाश्विन्यः ।
ऊरू च आषाढद्वयमथ गुह्यं फल्गुनीद्वितयं (युग्मं) ॥ १॥
कटिः अपि च कृत्तिका पार्श्वयोश्च यमला भवन्ति भद्रपदाः ।
कुक्षिस्था रेवत्यो विज्ञेयमुरोऽनुराधा च ॥ २॥
पृष्ठं विद्धि धनिष्ठां (धनिष्ठा) भुजौ विशाखा (विशाखां) स्मृतौ करौ हस्तः ॥ ३॥
अंगुल्यश्च पुनर्वसुः आश्लेषासंज्ञिताश्च नखाः ॥ ४॥
ग्रीवा ज्येष्ठा श्रवणं श्रवणौ (श्रवणौ श्रवनः) पुष्यो मुखं द्विजाः स्वातिः ।
हसितं शतभिषग् अथ नासिका मघा मृगशिरो नेत्रे ॥ ५॥
चित्रा ललाटसंस्था शिरो भरण्यः शिरोरुहाश्चार्द्रा ।
नक्षत्रपुरुषकोऽयं कर्तव्यो रूपमिच्छद्भिः ॥ ६॥
चैत्रस्य बहुलपक्षे ह्यष्टम्यां मूलसंयुते चन्द्रे ।
ह्युपवासः कर्तव्यो विष्णुं संपूज्य धिष्ण्यं च ॥ ७॥
दद्याद् व्रते समाप्ते घृतपूर्णं भाजनं सुवर्णयुतम् ।
विप्राय कालविदुषे सरत्नवस्त्रं स्वशक्त्या च ॥ ८॥
अन्नैः क्षीरघृतौत्कटैः सह गुडैः विप्रान् समभ्यर्चयेद्
दद्यात् तेषु सुवर्ण (तथैव) वस्त्ररजतं लावण्यमिच्छन् नरः ।
पादऋक्षात् प्रभृति क्रमादुपवसन्न् अंगऋक्षनामस्वपि
कुर्यात् केशवपूजनं स्वविधिना धिष्ण्यस्य पूजां तथा ॥ ९॥
प्रलंबबाहुः पृथुपीनवक्षाः क्षपाकरास्यः सितचारुदन्तः ।
गजेन्द्रगामी कमलायताक्षः स्त्रीचित्तहारी स्मरतुल्यमूर्तिः ॥ १०॥

शरदमलपूर्णचन्द्रद्युतिसदृशमुखी सरोजदलनेत्रा ।
रुचिरदशना सुकर्णा भ्रमरौदरसन्निभैः केशैः ॥११॥
पुंस्कोकिलसमवाणी ताम्रोष्टी (ताम्रोष्ठी) पद्मपत्रकरचरणा ।
स्तनभारानतमध्या प्रदक्षिणावर्तया नाभ्या ॥१२॥
कदलीकाण्डनिभ ऊरुः (ऊरूः) सुश्रोणी वरकुकुन्दरा सुभगा ।
सुश्लिष्टांगुलिपादा भवति प्रमदा मनुष्यश्च (मनुष्यो वा) ॥१३॥
यावन् नक्षत्रमाला विचरति गगने भूषयन्ती इह भासा
तावन् नक्षत्रभूतो विचरति सह तैः ब्रह्मणोऽह्नोऽवशेषम् ।
कल्पादौ चक्रवर्ती भवति हि मतिमां तत्क्षयागापि भूयः
संसारे जायमानो भवति नरपतिः ब्राह्मणो वा धनाढ्यः ॥१४॥
मृगशीर्षाद्याः केशवनारायणमाधवाः सगोविन्दाः ।
विष्णुमधुसूदनाख्यौ त्रिविक्रमो वामनश्चैव ॥१५॥
श्रीधरनामा तस्मात् सहृषीकेशश्च पद्मनाभश्च ।
दामोदर इत्येते मासाः प्रोक्ता यथासंख्यं ॥१६॥
मासनामसमुपोषितो नरो द्वादशीषु विधिवत् प्रकीर्तयन् ।
केशवम् समभिपूज्य तत्पदं याति यत्र नहि जन्मजं भयम् ॥१७॥

---

अध्याय १०५ उपसंहाराध्यायः
ज्योतिःशास्त्रसमुद्रं प्रमथ्य मतिमन्दराद्रिणाऽथ मया ।
लोकस्य आलोककरः शास्त्रशशांकः समुत्क्षिप्तः ॥१॥
पूर्वाचार्यग्रन्था नौत्सृष्टाः कुर्वता मया शास्त्रम् ।
तान् अवलोक्यैदं च प्रयतध्वं कामतः सुजनाः ॥२॥
अथवा कृशं (भृशं) अपि सुजनः प्रथयति दोषार्णवाद् गुणं दृष्ट्वा ।
नीचः तद्विपरीतः प्रकृतिः इयं साध्वसाधूनाम् ॥३॥
दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति ।
श्रावयितव्यं तस्माद् दुष्टजनस्य प्रयत्नेन ॥४॥
ग्रन्थस्य यत् प्रचरतोऽस्य विनाशमेति
लेख्याद् बहुश्रुतमुखाधिगमक्रमेण ।
यद्वा मया कुकृतमल्पमिहाकृतं वा
कार्यं तदत्र विदुषा परिहृत्य रागम् ॥५॥
दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिना इदम् ।
शास्त्रमुपसंगृहीतं नमोऽस्तु पूर्वप्रणेतृभ्यः ॥६॥

---

अध्याय १०६ शास्त्रानुक्रमणी
शास्त्रौपनयः पूर्वं सांवत्सरसूत्रमर्कचारश्च ।
शशिराहुभौमबुधगुरुसितमन्दशिखिग्रहाणां च ॥१॥
चारश्चागस्त्यमुनेः सप्तर्षीणां च कूर्मयोगश्च ।
नक्षत्राणां व्यूहो ग्रहभक्तिः ग्रहविमर्दश्च ॥२॥
ग्रहशशियोगः सम्यग्ग्रहवर्षफलं ग्रहाणां च ।
शृंगाटसंस्थितानां मेघानां गर्भलक्षणं चैव ॥३॥
धारणवर्षणरोहिणिवायव्याषाढभद्रपद (भाद्रपद) योगाः ।
क्षणवृष्टिः कुसुमलताः सन्ध्याचिह्नं दिशां दाहः ॥४॥
भूकंपौल्कापरिवेषलक्षणं शक्रचापखपुरं च ।
प्रतिसूर्यो निर्घातः सस्यद्रव्यार्घकाण्डं च ॥५॥
इन्द्रध्वजनीराजनखञ्जनकौत्पातवर्हिं (बर्हिं) चित्रं च ।
पुष्याभिषेकपट्टप्रमाणमसिलक्षणं वास्तु ॥६॥
उदक् (उदग्) आर्गलमारामिकममरालयलक्षणं कुलिशलेपः ।
प्रतिमा वनप्रवेशः सुरभवनानां प्रतिष्ठा च ॥७॥
चिह्नं गवामथ शुनाम् कुक्कुटकूर्माजपुरुषचिह्नं च ।
पंचमनुष्यविभागः स्त्रीचिह्नं वस्त्रविच्छेदः ॥८॥
चामरदण्डपरीक्षा स्त्रीस्तोत्रं चापि सुभगकरणं च ।
कान्दर्पिकानुलेपनपुंस्त्रिकाध्यायशयनविधिः ॥९॥
वज्रपरीक्षा मौक्तिकलक्षणमथ पद्मरागमरकतयोः ।
दीपस्य लक्षणं दन्तधावनं शाकुनं मिश्रम् ॥१०॥
अन्तरचक्रं विरुतं श्वचेष्टितं विरुतमथ शिवायाश्च ॥११॥
चरितं मृगाश्वकरिणां वायसविद्योत्तरं च ततः ॥१२॥
पाको नक्षत्रगुणाः तिथिकरणगुणाः सधिष्ण्यजन्मगुणाः ।
गोचरमथ (गोचरः तथा) ग्रहाणां कथितो नक्षत्रपुरुषश्च ॥१३॥
शतमिदमध्यायानामनुपरिपाटिक्रमादनुक्रान्तम् ।
अत्र श्लोकसहस्राणि आबद्धानि ऊनचत्वारि ॥१४॥
अत्रैवान्तर्भूतं परिशेषं निगदितं च यात्रायाम् ।
बह्वाश्चर्यं जातकमुक्तं करणं च बहुचोद्यम् ॥१५॥
॥ इति बृहत्संहिता॥

---